नक्षत्रेष्ट्यादौ उपदिष्टैरुपहोमादिभिः नारिष्ठहोमादीनामतिदिष्टानां समुच्चयः । १०।४।१.

नदीक्षिताधिकरणम् ( पुरुषार्थदानपाकहोमेषु दीक्षितकर्तृकत्वस्य पर्युदासः ) । १०।८।७.

नदीतरणे अनेकस्रोतस्त्वेऽपि आदौ सकृदेव दीक्षितस्य तरणमन्त्रप्रयोगः । ११।४।१७.

'न बृहत्या वषट् कुर्यात्' इति अक्षरव्यूहनविध्यर्थवादः सर्वपृष्ठायाम् । संकर्ष. ४।४।४.

नवनीतस्य गौग्गुलवादितैलेन समुच्चयः अञ्जनाभ्यञ्जनाख्ये सत्रे । १०।४।६.

'नवनीतेनाभ्यङ्क्ते' इति विधेः ज्योतिष्टोमे श्रुतं देवानामित्यादि अर्थवादः । ३।४।३.

नवान्नबुभुक्षाऽभावेऽपि आग्रयणं कर्तव्यमेव । संकर्ष. ३।१।१४.

नवान्नभक्षणनिषेधः आधानोत्तरमेव आग्रयणप्राप्तौ तदकरणे । संकर्ष. ३।१।१३.

नातिरात्रे इत्यत्र नशब्दः प्रतिषेधार्थक एव न पर्युदासार्थकः न वा अर्थवादः । १०।८।३.

नानाप्रदानाधिकरणम् ( भिन्नगुणदेवताभेदे प्रदानभेदः ) । संकर्ष. २।२।१५.

नानाबीजन्यायः ( नानाबीजेष्टौ प्रतिबीजम् अवघातमन्त्रावृत्तिः ) । ११।४।१३.

नानाबीजेषु कृष्णाजिनास्तरणादितण्डुलप्रक्षालननिनयनान्तेनानुसमयः । ५।२।७.

नानाबीजेष्टौ अन्त्यबीजसंबन्धिहविष्कृदाह्वानकाले एव वाग्विसर्गः राजसूये । ११।३।७.

नानाऽहीनेषु प्रत्यहीनं चतुर्थे दिवसे षोडशिनो ग्रहणम् । १०।५।१४.

नामधेयं दर्विहोमशब्दः श्रौतस्मार्तकर्मणाम् । ८।४।२.

नामधेयं दर्विहोमशब्दो होमानामेव, न यागानाम् । ८।४।३.

नामधेयन्यायः । नामधेयप्रामाण्यम् ( कर्मनामधेयं धर्मे प्रमाणम् ) । १।४।१ वर्णकं १.

नारिष्ठन्यायः ( नारिष्ठहोमा उपहोमेभ्यः पूर्वम् ) । ५।२।९.

नारिष्ठहोमादीनामातिदेशिकानां नक्षत्रेष्ट्यादौ उपदिष्टैरुपहोमादिभिः समुच्चयः । १०।४।१.

नाशाधिकरणम् ( शेषकार्यार्थावत्तनाशे शेषकार्यलोपः ) । ६।४।२.

निकायिनां पूर्वेषां ये धर्मास्तेषामतिदेशः उत्तरेषु निकायिषु । ८।१।१२.

निगदाधिकरणम् ( निगदाः यजुर्विशेषः ) । २।१।१३.

नित्यकर्मणः श्रुतद्रव्यापचारे प्रतिनिधिना समापनम् । ६।३।४.

नित्यस्य काम्यं बाधकम् । ३।६।३.

नित्याग्निहोत्रधर्माणां कुण्डपायिनामयनगते अग्निहोत्रे अतिदेशः । ७।३।१.

नित्ये यथाशक्ति अङ्गानुष्ठानम् । ६।३।१.

निनयनन्यायः ( प्रणीतानिनयनं प्रतिपत्तिः ) । ४।२।५.

निमित्तपरीष्ट्यधिकरणम् । १।१।३.

नियमविधिरवघातादिसंस्कारविधिः । ४।२।११.

निरूढपशुबन्धे होतृमैत्रावरुणयोर्द्वयोर्द्वयोर्वरणम् । संकर्ष. ३।४।१३.

निरूढादिपशुष्वपि शालामुखीयो भवति । संकर्ष. ३।२।२२.

निर्मन्थ्यन्यायः ( निर्मन्थ्यशब्दो धर्मान् नातिदिशति ) । ७।३।७.

निर्मन्थ्याधिकरणम् ( निर्मन्थ्यशब्दो यौगिकः अग्निविशेषबोधकः ) । १।४।९.

निर्मन्थ्येन लौकिकेन अग्निचयने इष्टकापाकः । संकर्ष. २।१।७.

निर्वापः अग्निहोत्रहवण्यभावेऽपि कर्तव्यः पवमानेष्टिषु । १०।२।२७.

निर्वापन्यायः । निर्वापमन्त्रन्यायः ( दर्शपूर्णमासादौ निर्वापाद्यङ्गमन्त्राणामावृत्तिः ) । ११।४।१४.

निर्वापमन्त्रगतसवित्रादिपदानां नोहः । ९।१।१२.

निर्वापमन्त्रगताग्निपदस्य विकृतौ ऊहः । ९।१।१३.

पत्नीसंयाजेष्वाश्रुतप्रत्याश्रुतप्रणववषट्कारभिन्नमन्त्रेष्वेव उपांशुत्वम् । संकर्ष. ४।३।१५.

पत्न्यधिकरणम् ( दंपत्योः सहाधिकारः ) । ६।१।४.

पत्न्याः यावदुक्तमधिकारः । ६।१।६.

पदकर्मन्यायः । पदन्यायः ( पदपांसवः न एकहायनीनयनप्रयोजकाः ) । ४।१।१०.

पदार्थप्राबल्याधिकरणम् ( पदार्थः प्रबलः, गुणो दुर्बलः । आचमनं प्रबलम्, तत्क्रमो दुर्बलः ) । १।३।३.

पदार्थानां शक्तिमालोच्य कर्मसु विनियोगः । १।४।१४.

पदार्थानुसमयन्यायः । ५।२।१.

'पदे जुहोति, वर्त्मनि जुहोति' इति आहवनीयापवादः । संकर्ष. २।४।१४.

पयआदिषु मैत्रावरुणादिग्रहेषु श्रयणार्थेषु प्रदेयधर्मा नानुष्ठेयाः ज्योतिष्टोमे । ९।४।१२.

पयसि अदितिचरुश्रपणार्थे प्रदेयधर्मा नानुष्ठेयाः प्रायणीये । ९।४।९.

पयसि आग्नेये सांनाय्यपयोधर्माणामेवातिदेशः । वि. ८।१।१७.

पयोधर्माणां सांनाय्यगतानामतिदेशः वैश्वदेवपर्वगतामिक्षायाम् । ८।२।४.

पयोव्रतादि ज्योतिष्टोमे अपररात्रे न नित्यम् । ६।८।९.

पयोव्रतादीनां क्रत्वर्थता । ४।३।४.

पयोव्रतादीनि ज्योतिष्टोमे नित्यानि । ६।८।८.

परकृतिपुराकल्पाधिकरणम् । ६।७।१२.

परप्राबल्यन्यायः ( अपच्छेदन्यायः ) । ६।५।१९.

परिक्रयः ऋत्विजां स्वामिकर्म । ३।८।१.

परिगृहीतद्रव्यापचारे वैकल्पिकद्रव्यान्तरस्य न प्रतिनिधित्वं यथा व्रीह्यपचारे यवानाम् । ६।३।१२.

परिधयो यत्र बाणवन्तः, तत्र बाणवन्त एव संमार्ष्टव्याः । २।१।४.

परिधिना प्राकृतपशुनियोजनानुवादेन विहितेन यूपस्य बाधः सौमिकेषु चातुर्मास्येषु । १०।३।३.

परिधौ मध्यमे अविरुद्धा यूपधर्माः कर्तव्याः पाशुकचातुर्मास्येषु । वि. ९।२।१३.

परिधौ यूपधर्मानुष्ठानाक्षेपस्य समाधानम् । ९।२।१३.

परिधौ यूपपरिध्युभयधर्माणामविरुद्धानां चातुर्मास्येषु पाशुकेषु अनुष्ठानम् । १२।२।१०.

परिधौ स्वधर्मविरोधे यूपधर्मा नानुष्ठेयाः चातुर्मास्येषु पाशुकेषु । १२।२।११.

परिप्लुपात्रेण सोमेन धिष्ण्यव्याघारणं ज्योतिष्टोमे । संकर्ष. ३।२।१९.

परिमाणं यूपस्य पञ्चारत्नित्वादि उपरं वर्जयित्वा ज्ञेयम् । संकर्ष. १।४।८.

परिवप्यहोमयोः 'अभितः पुरोडाशौ' इति पूर्वोत्तरकालवादः । संकर्ष. १।१।१०.

परिव्याणं रशनाद्वयेन युगपत् यूपैकादशिन्यामपि । संकर्ष. १।४।१४.

परिव्याणमग्निष्ठे द्वाभ्यांद्वाभ्यामेव रशनाभ्यां क्रमेण । संकर्ष. १।४।१३.

परिव्याणाधिकरणम् ( परिव्याणकरणमन्त्रमाध्वर्यवं कुण्डपायिनामयने होता ब्रूयात् ) । ३।८।१०.

परिसंख्या न भवति याजमानमन्त्राणां ज्योतिष्टोमे । संकर्ष. २।२।४.

परिसंख्या पशौ हृदयादीनामेव अवदानसंबन्धितया श्रूयमाणानां हविष्ट्वेन तदितरावयवानां हविष्ट्वस्य । १०।७।२.

परुषिदिताधिकरणम् ( परुषिदितमित्यादिवाक्यमनुवादकम् । परुषिदितादि पिण्डपितृयज्ञे श्रुतं समूलबर्हिर्विधेरर्थवादः ) । ३।४।३.

पर्णतान्यायः ( प्रकृत्यर्थता ) । ३।६।१.

पर्णतान्यायः । पर्णमयीन्यायः । ( फलश्रुतिरर्थवादः ) । ४।३।१.

पर्युदासः पुरुषार्थदानपाकहोमेषु दीक्षितकर्तृकत्वस्य । १०।८।७.

पर्युदासन्यायः ( अनुयाजमहापितृयज्ञयोः येयजामहहोतृवरणयोः पर्युदासः ) । १०।८।१.

पर्यूहणादिसंस्काराणां खलेवाल्यामनुष्ठानम् । १०।२।३३.

पर्वसंधिः तन्त्रमध्ये ग्रहीतव्यः । संकर्ष. ३।१।२.

पशौ आज्यभागप्रतिषेधः अर्थवादः । १०।८।२.

पशौ उत्तमप्रयाजार्थमपि स्रुगादापनप्रैषस्य आवृत्तिः । संकर्ष. ४।४।१०.

पशौ दैवतस्विष्टकृतयोरवदानं समकालम् । संकर्ष. २।२।१८.

पशौ पुंस्त्वादि लिङ्गं विवक्षितम् । ४।१।६.

पशौ पुरोडाशस्य श्रपणं शालामुखीये एव । संकर्ष. ३।२।२६.

पशौ प्रथमेष्टिपक्षे इष्ट्यर्थं प्रणीत एव आहवनीयः पश्वर्थमपि धार्यः । संकर्ष. ३।२।२३.

पशौ बहुदेवत्ये अध्रिगुप्रैषगतस्य एकवचनान्तस्य मेधपतिशब्दस्य द्विवचनान्तेन विकल्पः । ९।३।१३.

पशौ वरुणप्रघासेषु च शालामुखीयोऽस्ति । संकर्ष. ३।२।२८.

पशौ शकृत्संप्रवेधः लोहितनिरसनं च पश्वालम्भस्य न प्रयोजके । ४।१।१२.

पशौ हृदयादीनामेव अवदानसंबन्धितया श्रूयमाणानां हविष्ट्वेन तदितरावयवानां हविष्ट्वस्य परिसंख्या । १०।७।२.

पश्वर्थानुष्ठितप्रयाजादिभिरेव पशुपुरोडाशस्यापि उपकारसिद्धेः तदर्थं पृथगङ्गानुष्ठानं न कर्तव्यम् । १२।१।१.

पश्वेकत्वाधिकरणम् ( पशुना यजेत इत्येकत्वं विवक्षितम् ) । ४।१।५.

पाकः कृष्णलेषु औष्ण्यरूपः कार्यः । १०।२।१.

पाकयज्ञशब्दो दर्विहोममात्रवाचकः । संकर्ष. २।४।१०.

पाकयज्ञशब्दो लौकिकहोमानामेव वाचकः । संकर्ष. २।४।११.

पाकयज्ञेषु ' द्विर्जुहोति , द्विर्निमार्ष्टि , द्विः प्राश्नाति , उत्सृज्य आचामति , निर्लेढि ' इति धर्मा भवन्ति । संकर्ष. २।४।१२.

पाकहोमशब्दो नाहुतिपर्यायः । संकर्ष. २।४।९.

पाञ्चसांवत्सरिकपक्षोऽपि चातुर्मास्येषु । संकर्ष. ३।१।१९.

पाञ्चसांवत्सरिकावृत्तावपि चातुर्मास्येषु वैश्वानरपार्जन्यचातुर्होतृहोमानां सकृदेवानुष्ठानम् । संकर्ष. ३।१।२१.

पाठक्रमः काम्यानुष्ठाने न नियामकः । ५।३।१२.

पाठक्रमो मुख्यक्रमापेक्षया बलीयान् । ५।१।८.

पाठक्रमात् यथासंख्यरूपात् दब्धिमन्त्रो मध्यवर्ती मध्यवर्तिनः उपांशुयाजस्याङ्गम् । ३।३।५.

पाठक्रमाधिकरणम् । ५।१।४.

पाठयोर्मन्त्रब्राह्मणगतयोर्मन्त्रपाठो बलीयान् । ५।१।९.

पात्नीवतभक्षणाधिकरणम् ( पात्नीवतग्रहभक्षमन्त्रे पूर्वदेवतानामिन्द्रवाय्वादीनां नोपलक्षणम् ) । ३।२।१३.

पात्नीवतसोमभक्षणे त्रयस्त्रिंशतामनुपलक्षणम् । ३।२। १५.

पात्नीवतसोमभक्षमन्त्रे त्वष्टा नोपलक्षणीयः । ३।२।१४.

पात्नीवताधिकरणम् ( त्वाष्ट्रपात्नीवतस्य पशोः पर्यग्निकरणान्तत्वम् ) । २।३।८.

पात्नीवते पशौ ' आज्येन शेषं संस्थापयति ' इति वाक्यं कर्मान्तरं विदधाति । ९।४।१४.

पात्रन्यायः । पात्रभेदन्यायः ( पशौ प्रयाजानूयाजयोः ) । ५।२।८.

पानव्यापत् ( पीतसोमव्यापत्तौ प्रायश्चित्तम् ) । ३।४।१२.

पार्वणन्यायः ( पार्वणहोमयोर्विकृतौ नातिदेशः ) । ९।२।१८.

पार्वणहोमयोरन्यतरस्यैव तत्तत्समुदायोपकारकस्य दर्शपूर्णमासयोरनुष्ठानम् । ९।२।१९.

पार्वणहोमौ विकृतिषु न भवतः । संकर्ष. २।२।३.

पावकाग्निन्यायः ( पवमानेष्ट्यादिषु देवतानिष्ठगुणवाचिपदस्यापि यागादौ प्रयोगः ) । १०।४।१४.

पाशन्यायः ( पशुद्वयवत्यां विकृतौ पाशैकत्वपाशबहुत्वाभिधायिनौ मन्त्रौ द्विवचनान्तेन ऊहितव्यौ ) । ९।३।४.

पाशाधिकरणम् ( अग्नीषोमीये पशौ पाशैकत्वपाशबहुत्वाभिधायिनोर्मन्त्रयोर्विकल्पः ) । ९।३।५.

पाशुकतन्त्रस्यैव सवनीयपुरोडाशेषु प्रसङ्गः । १२।२।१२.

पृश्निप्राणग्रहाणाम् अनारभ्याधीतानामपि द्वादशाहे प्रायणीयोदयनीययोः दशमेऽहनि च निवेशः। संकर्ष. ३।३।२०.

पृश्निप्राणमन्त्राः न यागार्थाः, किन्तु सोममानार्थाः। संकर्ष. ३।३।१९.

पृषदाज्याधिकरणम् ( चातुर्मास्येषु अनुयाजीयदेवताप्रकाशनार्थं प्राकृतावाहनमन्त्रस्य अविकारेणैव प्रयोगः )। १०।४।२५.

पृष्ठशमनीयन्यायः ( पृष्ठशमनीयस्य ऋत्विगन्तरसंपादनेन सत्रकर्तॄणां प्रत्येकं कर्तृत्वम् )। १०।२।१३.

पृष्ठशमनीये सत्रिभ्योऽन्येऽपि ऋत्विजः, न तु त एव। १०।२।१४.

पृष्ठैरुपतिष्ठते इति पृष्ठशब्दः ऋग्द्रव्यवाचकः। ७।३।१४.

पृष्ठ्यगतेषु उक्थ्येषु अतिग्राह्याणां विकल्पः, न पर्युदासः। संकर्ष. ३।३।४.

पृष्ठ्यषडहस्य विजातीयषडहव्यवधानेन आवृत्तौ मध्वशनादेरपि आवृत्तिर्गवामयने। १०।६।११.

पृष्ठ्यषडहान्ते गवामयनगते वैकल्पिकमध्वशनघृताशनयोरनुष्ठानम्। १०।६।९.

पृष्ठ्यषडहावृत्तौ सर्वषडहान्ते सकृदेव मध्वाद्यशनम्, न तु प्रतिषडहान्ते गवामयने। १०।६।१०.

पृष्ठ्ये षडहे उपदिष्टेन मध्वशनेन अतिदिष्टस्य पयोव्रतादेः समुच्चयः। १०।४।११.

पृष्ठ्ये षडहे गवामयनगते बृहद्रथंतरयोः प्रत्यहमेकैकस्यैव अनुष्ठानम्। १०।६।३.

पेषणस्य बाधः सौर्ये चरौ। १०।१।१२.

पेषणस्य मन्थे न बाधः महापितृयज्ञे। १०।२।३४.

पौण्डरीकबर्हिषि 'पुण्डरीकैः स्तृणीत रक्तैः' इत्यूहः कर्तव्यो मौद्गे चरौ। वि. ९।३।२.

पौण्डरीके गवायुतस्य अश्वसहस्रस्य च दक्षिणायाः प्रत्यहं विभज्य वेद्योर्मध्येन उत्तरस्यां दिशि नयनम्। १०।६।१८.

पौण्डरीके गवायुतस्य अश्वसहस्रस्य च सकृत् दानम्। १०।६।१७.

पौरोडाशिककर्मार्थे हविष्कृदाह्वाने वाग्विसर्गः कर्तव्यः अग्नीषोमीये पशौ। ११।३।८.

पौरोडाशिकाज्यभागन्यायः ( पशुपुरोडाशे आज्यभागौ कर्तव्यौ )। १२।१।२.

पौर्णमासीन्यायः ( पौर्णमास्यमावास्याशब्दौ यागत्रिकयोरनुवादकौ )। २।२।३.

पौर्वापर्यन्यायः। पौर्वापर्यबलीयस्त्वन्यायः ( अपच्छेदन्यायः )। ६।५।१९.

पौष्णं पेषणं चरावेव। ३।३।१४.

पौष्णं पेषणं पूषमात्रदेवत्ये चरौ। ३।३।१५.

पौष्णपेषणाधिकरणम् ( विकृतौ पौष्णं पेषणम् )। ३।३।१३.

प्रकरणक्रमयोर्विरोधे। ३।३।७. भा. पृ. ८५४. वा. पृ. ८५४, ८३९.

प्रकरणक्रमाधिकरणम्। वि. ३।३।१०.

प्रकरणयोर्विरोधे। ३।३।७. वा. पृ. ८४०.

प्रकरणसमाख्ययोर्विरोधे। ३।३।७. वा. पृ. ८३९.

प्रकरणाधिकरणम् ( प्रकरणमपि विनियोजकं प्रमाणम् )। ३।३।४.

प्रकरणान्तरन्यायः ( कुण्डपायिनामयने मासाग्निहोत्रादिकं कर्मान्तरं प्रकरणान्तरगतत्वात् )। २।३।११.

प्रकरणान्तरप्रत्युदाहरणन्यायः ( अनुपादेयगुणानां कर्मान्तरत्वसाधकत्वं नास्ति )। २।३।१३.

प्रकृतिविकृत्योः समानतन्त्रत्वे विकृतितन्त्रेण प्रकृतेः प्रसङ्गसिद्धिः। कृत्वाचिन्ता। १२।२।१३.

प्रगीताया एव ऋचः वैकृतापूर्वस्तोत्रसाधनत्वम्। ९।२।८ वर्णकं १.

प्रजापतिः सप्तदशो दृष्टार्थ एव। संकर्ष. २।३।१.

प्रजापतिव्रताधिकरणम् ( व्रतानि पुरुषार्थानि )। ४।१।३.

प्रजापतिव्रतानि उद्यदादित्यानीक्षणसंकल्पादीनि पुरुषार्थानि। वि. ४।१।३.

प्रजापतिसप्तदशत्वस्य अग्न्यादिदेवतायोगेऽपि न भङ्गः। संकर्ष. २।३।२.

प्रधानेष्वनेकेषु संनिपातिनां पदार्थानुसमयः । ५।२।१.

प्रधानैरपृथक्कालानामङ्गानां तन्त्रं न द्वादशाहे । ११।४।६.

प्रमेयबलाबलन्यायः ( प्रमेयः पदार्थो बलवान् , गुणः अबलः ) । १।३।३.

प्रयाजः पञ्चमः आज्यभागदेवतासंस्कारार्थो दर्शपूर्णमासयोः । १०।१।७.

प्रयाजशेषाभिघारणन्यायः ( प्रयाजशेषेण हविरभिघारणार्थं शेषधारणतत्पात्रे पृथङ् न कर्तव्ये ) । ४।१।१४.

प्रयाजा आरादुपकारका दर्शपूर्णमासयोः । ९।२।२०.

प्रयाजादिधर्मा अपूर्वप्रयुक्ताः । ७।१।१.

प्रयाजादिषु एकादशत्वादिगुणविधिः अग्नीषोमीयपश्वादौ । १०।३।१.

प्रयाजादीनां दर्शपूर्णमासाङ्गत्वं प्रकरणात् । ३।३।४.

प्रयाजादीनामङ्गानामेकस्मिन् प्रयोगे सकृदनुष्ठानम् । ११।१।७.

प्रयाजानूयाजादीनामेकादशत्वादिसंख्या सर्वसंपाद्या पश्वादौ । ५।३।१.

प्रयाजार्थमाज्यसमानयनम् औपभृताज्यस्य प्रयोजकम् । ४।१।१५.

प्रयाजेषु पाशुकेषु आद्याश्चत्वारः प्राकृतानां चतुर्णां विकारः, पञ्चमादिषु षट्सु त्रयस्त्रयः चतुर्थपञ्चमयोर्विकारः, अन्त्यः अन्त्यस्य । संकर्ष. २।३।६.

प्रयाजैकादशत्वन्यायः (एकादशत्वसंख्या सर्वसंपाद्या) । ५।३।१.

प्रयाजोऽन्त्यः देवतासंस्कारापूर्वोभयार्थः । ४।१।७.

प्रयुक्तिविचारप्रतिज्ञा । ४।१।८.

प्रयोजनाधिकरणम् ( सत्रे प्रत्येकं कृत्स्नफलभोक्तॄणामधिकारः ) । ६।२।१.

प्रयोज्यप्रयोजकभावनिरूपणप्रतिज्ञा । ४।१।८.

प्रवरत्रयसंपादनसमर्थस्य दर्शादावधिकारः । ६।१।११.

प्रवरवरणे द्विगोत्राणाम् 'एकतो द्वौ अन्यत एकः' इति त्रयः । संकर्ष. ३।४।८.

प्रवरेऽध्वर्युवशात् होतुरपि आनुपूर्वीनियमः । संकर्ष. ३।४।४.

प्रवरो होतुरेव पूर्वः, अध्वर्योरुत्तरः । संकर्ष. ४।२।६.

प्रवर्ग्यन्यायः ( प्रवर्ग्यस्य निषेधः अग्निष्टोमप्रथमप्रयोगे ) । ३।३।१२.

प्रवृत्तिक्रमात् मुख्यक्रमो बलीयान् । ५।४।२.

प्रशंसाऽधिकरणम् ( अपशवो वै अन्ये गोअश्वेभ्यः इति गोअश्वानां स्तुतिः ) । १।४।१२-४. वि. १६.

प्रशसाशब्देन अग्निगुप्रैषगतेन बाह्वोः प्रशंसा । ९।४।४.

प्रसङ्गः पशुपुरोडाशतन्त्रस्य अग्निचयने अनुनिर्वाप्येषु देवसुवां हविरादिषु । १२।३।२.

प्रसङ्गः सवनीयपुरोडाशेषु पाशुकतन्त्रस्यैव । १२।२।१२.

प्रसङ्गसिद्धं दार्शिकं व्रतं प्रायणीयाऽऽदिषु सौमिकपयोव्रतादिना । १२।१।११.

प्रसङ्गसिद्धिः प्रकृतेर्विकृतितन्त्रेण प्रकृतिविकृत्योः समानतन्त्रत्वे । कृत्वाचिन्ता । १२।२।१३.

प्रसङ्गसिद्धिः प्राकृतस्य आरण्यभोजनस्य सौमिकपयोव्रतादिना प्रायणीयाऽऽदिषु । १२।१।१४.

प्रसङ्गसिद्धिः सौमिकेन पत्नीसंनहनेन सौमिकेष्टिपशुषु दार्शिकपत्नीसंनहनस्य । १२।१।१३.

प्रसङ्गसिद्धिरुपसदग्नीषोमीयबर्हिःप्रोक्षणस्य आतिथ्याबर्हिःप्रोक्षणेन । १२।१।१९.

प्रसङ्गसिद्धिर्दार्शिकवेदेः सोमाङ्गेष्टिपश्वादिषु सौमिकवेद्या । १२।१।३.

प्रसङ्गसिद्धिर्दीक्षणीयाऽऽदिषु अन्वाहार्यदक्षिणायाः सौमिकदक्षिणया । १२।१।१६.

प्रसङ्गसिद्धिर्न ऐष्टिकशेषभक्षाणां सौमिकव्रतादिभक्षणेन । १२।१।१५.

प्रसङ्गसिद्धिर्नास्ति सौमिकेन दीक्षाकालीनजागरणेन दार्शिकजागरणस्य । १२।१।८.

प्रसङ्गोऽग्निचयने अनुनिर्वाप्येषु देवसुवां हविःषु पशुपुरोडाशतन्त्रस्य । १२।३।२.

प्रसङ्गो न ज्योतिष्टोमे सवनीयपुरोडाशेषु सौमिकपात्रैर्ग्रहचमसैः दार्शिकपात्राणां जुह्वादीनाम् । १२।१।४.

प्रसङ्गो न सोमाङ्गेष्टिगतशेषभक्षाणां सौमिकदक्षिणया । १२।१।१७.

प्रैषः ' अजैदग्निः ' इत्यध्वर्योः मैत्रावरुणं प्रति । संकर्ष. २।३।९.

प्रैषः ' अजैदग्निः ' इत्यस्मात् ' उप प्रेष्य होतः ' इति पृथगेव । संकर्ष. २।३।८.

प्रैषः ' उक्थशा यज सोमस्य ' इति शस्त्रवन्मात्रे निवेश्यते । संकर्ष. २।३।१०.

प्रैषः ' उक्थशा यज सोमानाम् ' इति शस्त्रवत्स्वपि चमसैग्रहैश्च युगपद्धूयमानेष्वेव सोमेषु निवेश्यः । संकर्ष. २।३।११.

प्रैषः ' देवान् यज ' इति अनुयाजेषु त्रितयसाधारण एव । संकर्ष. २।३।३.

प्रैषः ' बर्हिः स्तृणीहि ' इति सोमार्थः । संकर्ष. १।३।१५.

प्रैषा आध्वर्यवाः । ३।८।१२.

प्रैषाधिकरणम् ( प्रैषप्रैषार्थयोर्भिन्नकर्तृकत्वम् ) । ३।८।११.

प्रैषानुवचनाधिकरणम् ( प्रैषानुवचनकर्तृत्वं मैत्रावरुणस्य ) । ३।७।२१.

प्रैषान् मैत्रावरुण एव ब्रूयात् ऋतुयाजेषु । संकर्ष. २।३।१२.

प्रोक्षणादयो धर्मा अपूर्वप्रयुक्ताः, न तु द्रव्यसंख्याहेतुसमुदायप्रयुक्ताः । ९।१।५.

प्रोक्षणादीनां पौरोडाशिकानां सौमिकपदार्थेभ्यः पूर्वभावित्वम् । ५।१।१३.

प्रोक्षण्यधिकरणम् ( प्रोक्षणीशब्दो यौगिकः ) । १।४।८.

प्रोत्साहनमन्त्रा याजमानाः । ३।८।६.

प्लक्षशाखायाः अग्नीषोमीये पशावेव विनियोगः । संकर्ष. १।३।१४.

फलं न विधेयम् । वि. ४।१।२ वर्णकं २.

फलचमसाधिकरणम् ( फलचमसः इज्याविकारः ) । ३।५।१९.

फलदेवताऽधिकरणम् ( फलदेवताप्रकाशका मन्त्रा अपूर्वप्रयुक्ताः ) । ९।१।३.

फल–नियम–कर्तृ–समुदायानां दार्शपौर्णमासिकानामन्यत्र कर्मणि नातिदेशः । ८।१।१३.

फलभूमाधिकरणम् ( सौत्रपदानुसारि शीर्षकमिदम् । प्रयाजादीनामङ्गानामेकस्मिन् प्रयोगे सकृदनुष्ठानम् ) । ११।१।७.

फलविधिवत् निगद्यमानमपि वाक्यं स्तावकमेव । १।२।२.

फलसंयोगाधिकरणम् ( जातेष्टिः पुत्रगतफलप्रयुक्ता ) । ४।१।१६.

फलसंस्कार्याधिकरणम् ( फलसंस्कार्ययोः कर्मभेदकत्वम् ) । २।३।१२.

बर्हिःसंपादनकाले व्रतमुपेयात् पूर्णमासे । ६।४।१२.

बर्हिःस्तरणमन्त्रे हरितपदस्थाने रक्तपदस्योहो मौद्गे चरौ । ९।३।२.

' बर्हिः स्तृणीहि ' इति प्रैषः सोमार्थः । संकर्ष. १।३।१५.

बर्हिराज्याधिकरणम् ( बर्हिराज्यादिशब्दा जातिवाचकाः ) । १।४।७.

बर्हिरादयः अङ्गप्रधानसाधारणाः । ३।७।१.

बर्हिरेकमेव आतिथ्योपसदग्नीषोमीयपशूनाम् । ४।२।१४.

बर्हिर्न्यायः ( बर्हिर्लवनमन्त्रः मुख्यकुशलवने । बर्हिर्लवनमन्त्रस्य लिङ्गेन मुख्ये कुशबर्हिषि विनियोगः ) । ३।२।१.

बर्हिर्न्यायः ( यूपावटस्तरणबर्हिः असंस्कृतम्–लौकिकम् ) । ३।८।१६.

बर्हिर्लवनादि प्रकृतावपि न सर्वार्थम् । ३।८।१७.

बलाबलाधिकरणम् (श्रुतिलिङ्गादीनां पूर्वपूर्वं प्रबलम्) । ३।३।७.

बहिष्पवमाने ऋगागमेन संख्या पूरयितव्या, ( सामाप्यभ्यसितव्यमिति भाष्यम् । एकस्यैव साम्नोऽभ्यास इति भाट्ट. ) विवृद्धस्तोमके क्रतौ । १०।५।७.

बहिष्पवमाने संख्यापूरणार्थम् आगमितानां तृचानां पर्यासोत्तरं निवेशः अतिरात्रे काम्यस्तोमविवृद्धौ । ५।३।४.

बहुयाजी नाम सोमयाजी एव । संकर्ष. ४।२।३.

बहुवचनस्य त्रित्वे पर्यवसानम् । ११।१।८.

बह्वनुग्रहन्यायः ( भूयोऽनुग्रहन्यायः ) । १२।२।७.

बाधः प्राकृताध्वर्युभागमात्रस्य राजसूयगते दशपेये विहिताभ्यां प्राकाशाभ्याम् । १०।३।१७.

बाधः भस्मसहितानामङ्गाराणामध्यारोपस्य सौर्ये चरौ । १०।१।१८.

बाधः यूपाहुतेः साद्यस्के खलेवाल्याम् । १०।१।५.

बाधः विकृतौ लुप्तार्थानां प्राकृतानामङ्गानाम् । १०।१।१.

बाधः वैश्वदेवीयदेवताऽऽवाहनकाले विष्णोरुरुक्रमस्य आवाहनस्य । १०।१।१ वर्णकं २.

बाधः न्युद्धरणस्य सौर्ये चरौ । १०।१।२०.

बाधः संतापनस्य सौर्ये चरौ । १०।१।१५.

बाधः संयवनस्य सौर्ये चरौ । १०।१।१३.

बाधः संवपनस्य सौर्ये चरौ । १०।१।१४.

बाधः सामान्यविहितैकादिदक्षिणायाः नैमित्तिके पुनराधाने श्रुतदक्षिणया । १०।३।५.

बाधः सोमापहारादौ एकादिदक्षिणया नित्यप्रयोगीयगोगतद्वादशशतसंख्यायाः, न तु अश्वादीनाम् । १०।३।१५.

बाधः स्थाण्वाहुतेः साद्यस्के । १०।१।६.

बाधयोग्यताऽधिकरणम् । वि. ३।३।१२.

बाधस्वरूपविचारः । ३।३।७. भा. वा. पृ. ८५८.

बाधो न अवघातस्य महापितृयज्ञे धानासु । १०।२।३४.

बाधो न आमिक्षायागस्विष्टकृतः । संकर्ष. १।४।२.

बाधो न एकादिदीक्षापक्षाणां साग्निचित्ये क्रतौ । संकर्ष. २।१।२९.

बाधो न कृष्णलचरौ भक्षाणां चुश्चुषाकारेण तत्संभवात् । १०।२।३.

बाधो न क्रतुदक्षिणायाः अग्निचेतृदक्षिणया । संकर्ष. १।१।८.

बाधो न क्रत्वर्थानामस्थियज्ञस्य मृताधिकारिकत्वपक्षे । १०।२।१९.

बाधो न निर्वापस्य अग्निहोत्रहवण्यभावेऽपि पवमानेष्टिषु । १०।२।२७.

बाधो न पर्यूहणादिसंस्काराणां साद्यस्के खलेवाल्याम् । १०।२।२३.

बाधो न पश्वादिविकृतौ उपदिष्टैरेकादशप्रयाजादिभिरङ्गैः प्राकृतान्तरस्य । १०।३।१.

बाधो न पाकस्य कृष्णलचरौ । १०।२।१.

बाधो न प्राकृतसाम्नां विवृद्धस्तोमकक्रतुषु उपदिष्टैः सामभिः । १०।४।१०.

बाधो न प्राकृताजद्रव्यस्य वायव्यपशौ उपदिष्टश्वेतगुणेन । १०।२।३०.

बाधो न मन्थे पेषणस्य महापितृयज्ञे । १०।२।३४.

बाधो न सत्रे ऋतुयाज्यावरणहिरण्यदानयोः अदृष्टार्थयोः । १०।२।२६.

बाधो न सर्वस्वारे यजमानजीवद्दशायां क्रियमाणप्रायणीयाऽऽदौ सूक्तवाकान्तर्गतायुराशासनादेः । १०।२।२५.

बार्हस्पत्यग्रहेण ऐन्द्रवायवादिग्रहाणां समुच्चयः बृहस्पतिसवे । १०।४।२.

बार्हस्पत्यचरुधर्माः पूर्वम्, पश्चात् सरस्वत्याज्यस्य कर्तव्याः अध्वरकल्पायाम् । ५।१।१०.

बाह्यग्रन्थानामप्रामाण्यम् । १।३।२. वा. पृ. १९४.

बीजवपनार्थानां अग्निचयनप्रकरणे पठ्यमानानां बहूनां मन्त्राणां केषांचिदेव चतुर्दशानाम् उपादानम्, न प्रथमानामेव । १०।५।५.

बृहद्रथंतरधर्माणां व्यवस्थया तत्तत्सामगानकाले अनुष्ठानम् । ९।२।१५.

बृहद्रथंतरधर्माणामविरुद्धानां कण्वरथंतरे समुच्चयो वैरूपस्तोमे । ९।२।१६.

बृहद्रथंतरयोः पृष्ठस्तोत्रे एव समुचित्य निवेशः संसवादौ उभयसामके क्रतौ । १०।६।८.

बृहद्रथंतरयोः प्रत्यहमेकैकस्यैवानुष्ठानं गवामयने पृष्ठ्ये षडहे । १०।६।३.

बृहद्रथंतरयोः स्वयोन्युत्तराग्रथनेन संपादितयोः ककुभोरेव गानम् । ९।२।६.

बृहद्रथंतरोभयसामके क्रतौ रथंतरादिधर्माणां प्रकृतिवद् व्यवस्था ( पृष्ठस्तोत्रे ) । ९।२।१७.

भृतियाचनं ज्योतिष्टोमे नित्यम् । ६।८।७.

मेदनस्कन्दनाद्यावृत्तौ प्रायश्चित्तावृत्तिः । ६।२।९.

मेदनादिनिमित्तकहोमाः दर्शपूर्णमासाङ्गम् । ६।५।१९.

भ्राष्ट्राद्यग्निना काम्येन अग्निचयनगतेन उख्यस्याग्नेर्बाधः । १२।४।७.

भ्राष्ट्राद्यग्नेः काम्यस्य अग्निचयनप्रकरणे श्रुतस्य आहवनीयत्वं नास्ति । १२।४।८.

'मण्डलेष्टका उपदधाति' इति चतुरस्राणामेवेष्टकानां नामान्तरम् । संकर्ष. २।१।२५.

मथितोऽग्निः आधाने गार्हपत्यार्थ एव । संकर्ष. ३।२।१.

मधुभक्षणं क्रत्वर्थं सत्रिभिः कर्तव्यम् । १०।६।१२.

मधूदकयोश्चित्रेष्टिगतयोः उपांशुयाजधर्माणामतिदेशः । ८।१।१९.

मध्वशनघृताशनयोर्वैकल्पिकयोः गवामयने पृष्ठ्यषडहान्ते अनुष्ठानम् । १०।६।९.

मध्वशनादेरनुष्ठानं गवामयने पृष्ठ्यषडहावृत्तौ सर्वषडहान्ते सकृदेव, न तु प्रतिषडहान्ते । १०।६।१०.

मध्वशने घृताशने च वैकल्पिके षडहधर्माः कर्तव्याः । वि. ९।२।१२.

मध्वशनेन पृष्ठ्ये षडहे उपदिष्टेन अतिदिष्टस्य पयोव्रतादेः समुच्चयः । १०।४।१.

मनुवत् कल्पः त्र्यार्षेयभिन्नब्राह्मणानाम् । संकर्ष. ३।४।५.

मनोतान्यायः ( मनोतामन्त्रस्य वायव्यादिपशौ नोहः— 'त्वं ह्यग्ने प्रथमः' इत्यत्र 'त्वं हि वायो प्रथमः' इति नोहः ) । १०।४।२१.

मनोतामन्त्रस्य 'त्वं ह्यग्ने मनोता' इत्यस्य सौम्यव्यवहितयोः कृष्णग्रीवयोरावृत्तिः । ११।४।२०.

मन्त्रगतमाख्यातं न विधायकम् । २।१।६.

मन्त्रप्रयोगः कर्मकालीनः अनध्यायादावपि । १२।३।७.

मन्त्रलक्षणम् । २।१।७.

मन्त्रलक्षणशेषाधिकरणम् ( ऊहप्रवरनामधेयानां न मन्त्रत्वम् ) । २।१।९.

मन्त्रलिङ्गाधिकरणम् ( मन्त्रस्य लिङ्गेन कर्मणि विनियोगः ) । ११२।४.

मन्त्रस्य न प्रतिनिधिः । ६।३।५.

मन्त्राणां ब्राह्मणविनियुक्तानां विकल्पः । १२।३।१५.

मन्त्राणां ब्राह्मणोत्पन्नानां भाषिकः स्वरः प्रयोक्तव्यः । १२।३।९.

मन्त्राणां संख्यया विहितानां समुच्चयः अग्निचयनादौ । १२।३।१४.

मन्त्राणां हौत्राणां समुच्चयः ( याज्याऽनुवाक्ययोः ) । १२।३।१६.

मन्त्राधिकरणम् ( प्रोत्साहनमन्त्रा याजमानाः ) । ३।८।६.

मन्त्राधिकरणम् ( मन्त्रा अनुष्ठेयार्थस्मारकाः ) । ११२।४.

मन्त्रान्ते कर्मप्रारम्भः करणमन्त्रेषु । १२।३।१०.

मन्त्रान्तेन कर्मादिसंनिपातः आघारे । १२।३।१२.

मन्त्रान्तेन कर्मादिसंनिपातो वसोर्धारायामग्निचयने । १२।३।११.

मन्त्रोहन्यायः ( सौर्यादिविकृतौ अतिदिष्टे मन्त्रे वैकृतद्रव्यादिवाचकपदस्योहः ) । ९।३।१.

मन्द्राभिभूतिरित्यादिः भक्षयाम्यन्तः एको मन्त्रः । ३।२।१०.

मलवद्वासःसंवादनिषेधाधिकरणम् ( रजस्वलया संवादस्य निषेधः पुरुषार्थः ) । ३।४।७.

महापितृयज्ञे तिसृणामृचां द्वे एव पुरोनुवाक्ये, तृतीया याज्या । संकर्ष. ४।४।५.

महापितृयज्ञे द्वयोरनुवाक्ययोः प्रत्येकं प्रणवः । संकर्ष. ४।४।६.

महापितृयज्ञे धानासु अवघातस्य न बाधः । १०।२।३४.

महापितृयज्ञे मन्थे पेषणस्य न बाधः । १०।२।३४.

महापितृयज्ञे येयजामहस्य पर्युदासः । १०।८।१.

महाभूमिर्न देया विश्वजिति सर्वस्वदाने । ६।७।२.

महाव्रते तार्प्यादिभिः प्राकृताहतवाससः समुच्चयः । १०।४।७.

मैत्रावरुणस्य अग्नीषोमीये पशौ एक एव भागः । १०।७।७.

मैत्रावरुणस्य प्रैषानुवचनकर्तृत्वम् । ३।७।२१.

मैत्रावरुणादिग्रहेषु श्रयणार्थेषु पयआदिषु प्रदेयधर्मा नानुष्ठेयाः । ९।४।१२.

मैत्रावरुणाय दण्डदानमर्थकर्म । ४।२।६.

मौद्गे चरौ प्राकृतबर्हिःस्तरणमन्त्रे हरितपदस्थाने रक्तपदस्योहः । ९।३।२.

यजतिचोदनत्वे सति अहर्गणसाध्यत्वमहीनत्वम् । १०।६।१६.

यजतिचोदनासु प्रक्षेपान्तत्वम् । संकर्ष. २।४।१.

यजति जुहोति इत्यादौ शब्दान्तरं कर्मभेदकं प्रमाणम् । २।२।१.

'यजमानः प्रस्तरः' इति यजमानशब्दः प्रस्तरस्य स्तावकः उभयोः कर्मसाधकत्वात् । (याजमान–शब्देऽपि द्रष्टव्यम् ) । १।४।१२–१. वि. १३.

यजमानगतमेव अरत्न्यादिपरिमाणं यूपादौ । संकर्ष. १।४।९.

यजमानगतमेव मानम् अग्निचयने चितिमानेषु ग्राह्यम् । संकर्ष. १।४।१०.

यजमानपूर्वजा एव ऋषयः 'आर्षेयं वृणीते' इति उक्ताः । संकर्ष. ३।४।१.

यजमानमरणोत्तरमपि सर्वस्वारः ऋत्विग्भिः समापनीयः । १०।२।२३.

यजमानसंस्काराः प्रधानमात्रार्थाः । ३।७।२.

यजमानसंस्काराः सर्वयजमानार्थाः सत्रे । १२।४।१४.

यजमानसोमपानव्यापत्तौ सोमेन्द्रश्चरुः । ३।४।१३.

यजमानस्य ऋतुयाजेषु स्वयंयाज्यापाठे वषट्कारनिमित्तोऽस्ति भक्षः । ३।५।१८.

यजमानस्य पत्नीनां सर्वासां संनहनं दर्शपूर्णमासादौ । संकर्ष. १।२।१.

यजमाना एव ऋत्विजः सत्रे । १०।६।१५.

यजमानाः सत्रे बहवः । १०।६।१४.

यजमानेन कर्मसु त्यागः स्वयं कर्तव्यः, इतरत् ऋत्विग्द्वारा । ३।७।८.

यजुर्युक्ताधिकरणम् ( वाजपेये श्रुतेन यजुर्युक्तरथेन अध्वर्योः दास्यादिभागान्तरस्य समुच्चयः ) । १०।३।२१.

यजुर्लक्षणम् । २।१।१२.

यज्ञपत्यधिकरणम् ( विकृतौ इडानिगदे यज्ञपतिशब्दस्य नोहः ) । ९।१।१४.

यज्ञपात्राणां धारणमाधानमारभ्यैव । ११।३।१४.

यज्ञपात्राणां यावज्जीवं धारणं नियतम् । ११।३।१३.

यज्ञायज्ञीये गिरापदस्थानापन्ने इरापदे गानं कर्तव्यम् । ९।१।१९.

यज्ञायज्ञीये गिरापदस्य इरापदेन बाधः । ९।१।१८.

यज्ञायुधाधिकरणम् ( यज्ञायुधवाक्यमनुवादकम् ) । ४।१।४.

यज्ञेषु अग्निष्टोमस्य प्राथम्यम् । ५।३।१३.

'यथाभागं व्यावर्तध्वम्' इति ऊहः पुरोडाशगणे कार्यः । संकर्ष. १।३।१८.

'यथाभागं व्यावर्तेथाम्' इत्यत्र पिण्डावेव संबोध्यौ । संकर्ष. १।३।१६.

यथाशक्त्यधिकरणम् ( यथाशक्त्यनुष्ठातुरपि नित्यकर्मसु अधिकारः ) । ६।३।१.

'यदि रथंतरसामा सोमः स्यात्' इत्यादिग्रहाग्रताया: ज्योतिष्टोमाङ्गत्वम् । २।३।१.

यववराहाधिकरणम् ( यववराहशब्दयोः आर्यप्रसिद्ध्यनुसारेण अर्थः कर्तव्यः ) । १।३।४.

यवाग्रयण–व्रीह्याग्रयणयोर्भेदेनानुष्ठानम् । संकर्ष. ३।१।८.

यागलक्षणम् । ४।२।१२.

यागादौ विधिगतशब्देनैव देवताप्रकाशनं कार्यम् । १०।४।१२.

यागे निर्धनस्याप्यधिकारः । ६।१।८.

याजमानं तप उपवासरूपम् । ३।८।३.

याजमानमन्त्राणां न परिसंख्या ज्योतिष्टोमे । संकर्ष. २।२।४.

याजमानमितिसमाख्यातानां कर्मणां पत्नीकर्तृकत्वाभावः । ६।१।६.

यूपैकादशिन्यामुपराणां दैर्घ्येण साम्यम्, न तिर्यकूत्वेन। संकर्ष. १।४।२४.

यूपैकादशिन्यामेकादशपशुयोजनं कापेय्या पद्धत्या अहीनेषु उत्कृष्यते, इतरा पद्धतिस्तु प्रकृतौ। संकर्ष. १।४।२५.

येयजामहन्यायः (पर्युदासन्यायः)। १०।८।१.

योगसिद्ध्यधिकरणम् (प्रतिफलं पृथगनुष्ठानम्)। ४।३।११.

योनिगतानां स्तोभानाम् उत्तरयोर्ऋचोरतिदेशः। ९।२।१०.

योनिसाम्नः उत्तरावर्णवशेन उत्तरयोर्ऋचोर्गानम् (सामयोन्यां ये आईभावादयः, ते उत्तरयोः तद्गतवर्णवशेनैव कर्तव्याः)। ९।२।९.

'यो विदग्धः' इत्यादि दर्शपूर्णमासयोः श्रुतम् 'अविदहता श्रपयितव्यः' इत्यस्य विधेरर्थवादः। ३।४।३.

यौधाजयसाम्नो गानं बृहतीविष्टारपङ्क्त्योरेव प्रग्रथनेन संपादिते बार्हते तृचे ज्योतिष्टोमे। ९।२।६ वर्णकं २.

रथंतरगाने 'स्वर्दृशं प्रति वीक्षेत' इति वीक्षणे स्वर्दृक्पदपाठकालस्य विधानम्। १०।६।२.

रथंतरादिशब्दाः सामशब्दश्च गीतिवाचकाः। ९।२।१.

रथंतरादिसाम्नां तृचे गानम्। १०।६।१.

रथंतराधिकरणम् (यदि रथंतरसामा सोमः स्यात् इत्यादिग्रहाग्रताया: ज्योतिष्टोमाङ्गता)। २।३।१.

रथंतराधिकरणम् (रथंतरादिशब्दानां गीतिवाचित्वम्)। ७।२।१.

रथकारस्यापि आर्षेयवरणमस्ति। संकर्ष. ३।४।६.

रथकाराधिकरणम् (सौधन्वनः आधाने अधिकारः)। ६।१।१२.

रथघोषाधिकरणम् (वाजपेये माहेन्द्रस्तोत्रोपाकरणसाधनतया विहितेन रथदुन्दुभिघोषेण प्राकृतदर्भमन्त्रयोर्बाधः)। १०।४।१ वर्णकं २.

रथमुखे 'भुवनस्य पते' इत्यादयः दशाहुतयः स्युः। संकर्ष. २।४।२८.

रथाक्षमात्राणि अन्तरालानि यूपैकादशिन्यादौ। संकर्ष. १।४।२१.

रशनाः ऐकादशिनाः 'अग्निष्ठे परिवीय वासयति' इति रशनासंस्कारविशेषः। संकर्ष. १।४।१२.

रशनाद्वयेन युगपत् परिव्याणं यूपैकादशिन्यामपि। संकर्ष. १।४।१४.

रशनाऽधिकरणम् (यूपाङ्गम्)। ४।४।९.

रशनाऽधिकरणम् (रशनाधर्माः सर्वपशुसाधारणाः)। ३।६।१०.

राजन्यचमसभक्षणं दशपेये ब्राह्मणानामेव। ३।५।२०.

राजन्यवैश्ययोर्यजमानयोः फलचमसः होमभक्षयोः। ३।५।१९.

राजसूयगतवैष्णवे आतिथ्यावैष्णवधर्माणां नातिदेशः। ७।३।६.

राजसूयगते दशपेये (अश्वमेधे इति भाष्यम्) विहिताभ्यां प्राकाशाभ्यां प्राकृताध्वर्युभागमात्रस्य बाधः। १०।३।१७.

राजसूयन्यायः। ४।४।१.

राजसूयशब्दवाच्यानां यागानामेव फलार्थत्वम्। ४।४।१.

राजसूयाद् भिन्नं तन्त्रं ब्राह्मणादिकर्तृकाया अवेष्टेः। ११।४।३.

राजसूये नानाबीजेष्टौ अन्यबीजसंबन्धिहविष्कृदाह्वानकाले एव वाग्विसर्गः। ११।३।७.

राजसूये नैर्ऋते चरौ तुषविमोकसाधनेषु नखेषु उलूखलमुसलधर्मः प्रोक्षणं कर्तव्यम्। वि. ९।२।१२.

राजसूये पृथग्दक्षिणायुक्तानामाग्नावैष्णवादीनां भेदेन अङ्गानुष्ठानम्। ११।४।१.

राजसूये विदेवनादीनामभिषेकात् प्रागपकर्षः। ५।२।१०.

राजसूयोपक्रमे वृतानामेव ऋत्विजां समाप्तिपर्यन्तता। ११।४।२.

राजोपेतब्राह्मणोपेतयोरपि जातिप्रयुक्तं प्रवरवत्त्वम् (क्षत्रियवृत्तिमाश्रिता विप्रा राजोपेताः। ब्राह्मणेन पुत्रत्वेन

वनस्पतियागे नोपस्तरणाभिघारणे । सकर्ष. २।२।१०.

वनिष्ठु-अधिकरणम् ( वनिष्ठुना अग्नीधः प्राकृतकृत्स्ने-डाभक्षस्य निवृत्तिः अग्नीषोमीये पशौ ) । १०।७।५.

वपनाधिकरणम् ( वपनादयः संस्कारा याजमानाः ) । ३।८।२.

वपायां प्राकृतावदानधर्मस्य नातिदेशः । संकर्ष. २।२।१६.

वमनाधिकरणम् ( सोमवमने प्रायश्चित्तम् ) । ३।४।१२.

वरणम् । 'ऋतुप्रैषादिभिर्वृणीते' इति येषां शाखायां वचनम्, तेषां तैरेव मन्त्रैर्वरणम् । संकर्ष. ३।४।११.

वरणं निरूढपशुबन्धे होतृमैत्रावरुणयोर्द्वयोः । संकर्ष. ३।४।१३.

वरणं वषट्कर्तॄणां सप्तानामपि लौकिकया वाचा, अग्नीषोमीये पशौ । संकर्ष. ३।४।१०.

वरणं वषट्कर्तॄणामेव अग्नीषोमीये पशौ 'सप्त वृणीते' इत्यनेनोक्तम् । संकर्ष. ३।४।९.

वरणं सत्रे नास्ति । १०।२।१०.

वरणं सोमार्थम् औपवसथ्येऽहनि । संकर्ष. ३।४।१४.

वरणधर्मे ऊर्ध्वज्ञुत्वादिः होतुरेव, न सर्वेषामृत्विजाम् । संकर्ष. ४।२।५.

वरुणप्रघासगतपञ्चसंचरेषु वैश्वदेविकसार्थवादविधिकाण्डस्य अतिदेशः । ७।१।३.

वरुणप्रघासगतैककपालधर्माणां साकमेधीयैककपाले अतिदेशः । ७।१।५.

वरुणप्रघाससार्थवादविधिकाण्डस्य साकमेधीयैन्द्राग्नैक-कपालयोरतिदेशः । ७।१।४.

वरुणप्रघासानां प्रावृषि अनुष्ठाने 'सकृदुपस्तीर्य द्विरभिघारयेत्' इति विधिः । संकर्ष. ३।१।२२.

वरुणप्रघासावभृथस्य तुषनिष्कासद्रव्यकत्वम् । ७।३।५.

वरुणप्रघासावभृथे अवभृथनाम्ना सौमिकावभृथ-धर्माणामतिदेशः । ७।३।४.

वरुणप्रघासेषु अध्वर्युभिन्नानां कर्तॄणां तन्त्रम् । ११।२।१०.

वरुणप्रघासेषु अवभृथधर्मककर्मान्तरस्य विधानम् । ११।२।१५.

वरुणप्रघासेषु दक्षिणविहारे क्रियमाणमारुत्यर्थे पृथगङ्गा-नुष्ठानम् । ११।२।९.

वरुणप्रघासेषु दक्षिणविहारे प्रतिप्रस्थात्रा मन्त्राः अध्वर्योः पृथगुच्चारणीयाः । १२।१।९.

वरुणप्रघासेषु पत्नीसंयाजानां द्विरावृत्तिः । ११।२।११.

वरुणप्रघासेषु शमीमय्यो हिरण्मय्यो वा स्रुचः संमार्ष्टव्याः । २।१।४.

वरुणप्रघासेषु शालामुखीयोऽस्ति । संकर्ष. ३।२।२८.

वर्चोन्यायः ( करणमन्त्रप्रकाश्यं फलं याजमानम् । 'ममाग्ने वर्चो विहवेष्वस्तु' इत्युदाहरणमन्त्रगतपदानु-सारेण शीर्षकम् ) । ३।८।१३.

वर्णत्रयस्यापि अधिकारः अध्वरकल्पाऽऽदिषु श्रुत-सामिधेनीसप्तदश्यासु । ६।६।७.

वर्त्मादिना विशेषविहितेन ज्योतिष्टोमादौ आहव-नीयस्य सामान्यविहितस्य बाधः । १०।८।८.

वषट्कारे प्राणापाननिमेषाणां प्रतिशाखमुपसंहारः । संकर्ष. ४।३।७.

वषट्कारे 'यं कामयेत प्रमायुकः स्यात्' इति स्वर्गकामविधेरर्थवादः । संकर्ष. ४।३।५.

वषट्कारोऽपि पृथक् सोमभक्षकारणम् । ३।५।१०.

'वषट् ते विष्णो' इति वषट्शब्दः न होमार्थः । संकर्ष. २।४।१९.

'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिना वसन्ता-दिकालविशिष्टमाधानं विधीयते । २।३।३.

वसाहोमन्यायः ( वसाहोमानामेकदेवताकपशुगणे तन्त्रम् ) । ११।२।५.

वसाहोमानां भिन्नदेवताके पशुगणे तन्त्रभेदः । ११।२।६.

वसोर्धारायां मन्त्रान्ते कर्मादिसंनिपातः अग्निचयने । १२।३।११.

वाक्यक्रमयोर्विरोधे । ३।३।७. वा. पृ. ८३७, ८३९.

वाक्यगतं प्रत्येकं पदं नापूर्वबोधकम्, किन्तु एकमेव । २।१।१.

वाक्यप्रकरणयोर्विरोधे । ३।३।७. भा. पृ. ८५१, वा. पृ. ८३९.

वाक्यप्रकरणाधिकरणम् । वि. ३।३।९.

वाक्यभेदाधिकरणम् । २।१।१५.

वाक्ययोर्विरोधे । ३।३।७. वा. पृ. ८४०.

वाक्यशेषाधिकरणम् ( संदिग्धस्योपक्रमस्य वाक्यशेषान्निर्णयः ) । १।४।१३.

वाक्यसमाख्ययोर्विरोधे । ३।३।७, वा. पृ. ८३७, ८३९.

वाक्याधिकरणम् (वेदवाक्यं धर्मप्रत्यायकम्)। १।१।७.

वाग्विसर्गः पौरोडाशिककर्मार्थे हविष्कृदाह्वाने कर्तव्यः अग्नीषोमीये पशौ । ११।३।८.

वाग्विसर्गः राजसूये नानाबीजेष्टौ अन्त्यबीजसंबन्धिहविष्कृदाह्वानकाले एव । ११।३।७.

'वाग् वै हविष्कृत्' इति वाचो हविष्कृत्त्वमर्थवादः। संकर्ष. १।१।११.

वाजपेयः प्राकृताङ्गेषु नानाकर्तृकः । ३।७।२३.

वाजपेयगतप्राजापत्यपश्वङ्गादिश्रपणार्थे कुम्भीशूलवपाश्रपणीनां तन्त्रम् । ११।४।८.

वाजपेयादिविकृतौ वैकल्पिकानां प्राकृतानां खादिरत्वादीनां मध्ये अन्यतमपुनःश्रुतौ नियमविधित्वम् । १०।७।१६.

वाजपेयाधिकरणम् ( वाजपेयशब्दः कर्मनामधेयम् )। १।४।५.

वाजपेये ऋतुपशूनां प्राजापत्यपशूनां च अध्रिगुमन्त्रस्यावृत्तिः । ११।४।२०.

वाजपेये क्लृप्तिमन्त्रवाचनं ज्ञानवत एव यजमानस्य । ३।८।८.

वाजपेये नैवारचरुनीवारेषु प्रोक्षणावघातादयः कर्तव्याः । वि. ९।२।१२.

वाजपेये प्राजापत्यपशुधर्माणां पदार्थानुसमयः । ५।२।१.

वाजपेये प्राजापत्यपशुषु दैवतावदानादिना अनुसमयः। ५।२।६.

वाजपेये माहेन्द्रस्तोत्रोपाकरणसाधनतया विहितेन रथदुन्दुभिघोषेण प्राकृतदर्भमन्त्रयोर्बाधः । १०।४।१ वर्णकं २.

वाजपेये श्रुतेन यजुर्युक्तरथेन अध्वर्योः दास्यादिभागान्तरस्य समुच्चयः । १०।३।२१.

वाजपेये सप्तदशशरावे चरौ मुष्टिलेपेन चतुःसंख्याऽनुग्रहः कर्तव्यः । १०।२।२८.

वाजपेये सर्वसोमोत्तरं प्राजापत्याङ्गप्रचारः । ११।३।१५.

वाजपेये हिरण्यमालित्वं सर्वेषामेव ऋत्विजाम्, नाध्वर्योरेव । ३।८।४.

वाजपेयोपदिष्टैः प्राजापत्यैः पशुभिः आतिदेशिकानां ऋतुपशूनां समुच्चयः । १०।४।३.

वाजिनन्यायः ( वाजिनं तप्ते पयसि दध्यानयनस्य न प्रयोजकम् ) । ४।१।९.

वाजिनन्यायः ( वाजिनयागः द्रव्यदेवतारूपगुणभेदात् कर्मान्तरम् ) । २।२।९.

वाजिनमुपसेचनार्थे यागार्थात् पृथङ् नोत्पाद्यम् । संकर्ष. १।४।१.

वाजिनसुराग्रहयोः ऐष्टिकधर्माणामतिदेशः । ८।२।१.

वाजिनस्य परप्रयुक्तद्रव्यत्वात् नावदानम् । संकर्ष. ४।४।८.

वाजिनानुवषट्कारस्यैव स्विष्टकृद्यागत्वम् । संकर्ष. १।४।२.

वायव्यपशौ उत्तराघारे हिरण्यगर्भमन्त्रस्य निवेशः । १०।३।२.

वायव्यपशौ उपदिष्टश्वेतगुणेन प्राकृताजद्रव्यस्य न बाधः । १०।२।३०.

वायव्यादिपशौ मनोतामन्त्रस्य नोहः ( 'त्वं ह्यग्ने प्रथमः' इत्यत्र 'त्वं हि वायो प्रथमः' इति नोहः ) । १०।४।२१.

वारणवैकङ्कताऽधिकरणम् । वारणाधिकरणम् ( वारणवृक्षजन्यपात्रविचारात् शीर्षकम् । वैकङ्कतपात्राणां दर्शपूर्णमासादिसर्वयज्ञेषु विनियोगः ) । ३।१।१२.

वारवन्तीयादीनां कर्मान्तरत्वम् । २।२।१२.

वारुणाधिकरणम् ( वारुणी इष्टिः वैदिके अश्वदाने ) । ३।४।१०.

वारुणीष्टिः अश्वदातुः । ३।४।११.

वार्त्रघ्न्यधिकरणम् ( वार्त्रघ्नीवृधन्वत्योरनुवाक्ययो-राज्यभागाङ्गत्वम् ) । ३।१।१३.

वासोवत्सदक्षिणया आग्रयणे उपदिष्टया अतिदिष्टा-न्वाहार्यदक्षिणाया बाधः । १०।३।६.

वासोवत्सयोः आग्रयणे दक्षिणारूपयोः प्राकृतान्वा-हार्यधर्माः कर्तव्याः । १०।३।७.

विकल्पः अग्नीषोमीये पशौ पाशैकत्वपाशबहुत्वाभि-धायिनोर्मन्त्रयोः । ९।३।५.

विकल्पः अदाक्षिण्य-सर्वस्वदाक्षिण्ययोः उद्गातृप्रति-हर्त्रोरपच्छेदयौगपद्ये । ६।५।१८.

विकल्पः अध्रिगुप्रैषगतस्य एकवचनान्तस्य मेधपति-शब्दस्य द्विवचनान्तेन । ९।३।१३.

विकल्पः अश्वमेधे सवनीयपशुत्रयार्थे अध्रिगुप्रैषे अश्वविषये 'चतुस्त्रिंशद्वाजिनः' इति मन्त्रस्य । वि. ९।४।३.

विकल्पः आधानदक्षिणानां संख्यासु । १२।४।५.

विकल्पः । एकस्मिन् कर्मणि शाखाभेदेन मन्त्रनानात्वे विकल्पेन विनियोगः । संकर्ष. १।२।२.

विकल्पः ऐकादशिनादिपशुगणेषु पत्नीसंयाजेषु जाघनीनाम् । १२।४।६.

विकल्पः करणमन्त्राणामेककार्याणाम् । १२।३।१३.

विकल्पः । कर्मणि एकस्मिन् भूयोमन्त्रसत्त्वे मन्त्रस्य विकल्पेन ग्रहणम् । संकर्ष. १।२।३.

विकल्पः गीत्युपायानां विश्लेषादीनां शाखाभेदेन समाम्नातानाम् । ९।२।७.

विकल्पः 'चित्ताय स्वाहा, चित्तये स्वाहा' इत्यादिभिः शाखान्तरमन्त्रैः 'चित्तं च स्वाहा' इत्यादीनाम् । संकर्ष. २।४।२२.

विकल्पः प्रायश्चित्तानां दोषनिर्घातार्थानाम् । १२।३।५.

विकल्पः याज्याऽनुवाक्यायुगलद्वयस्य ऐन्द्राबार्हस्पत्ये कर्मणि । १२।४।२.

विकल्पाधिकरणम् (विकल्प एककार्याणां गुणाना-मेकस्मिन् कर्मणि ) । १२।३।४.

विकल्पो न 'इमे वयम्, स्मो वयम्' इति पाठयोः स्रुगादापनमन्त्रे, कर्मान्तरे सावकाशत्वात् । संकर्ष. ४।३।१.

विकल्पो न द्रव्यस्य कर्मणो वा आग्रयणेषु । संकर्ष. ३।१।१६.

विकल्पो ब्राह्मणविनियुक्तानां मन्त्राणाम् । १२।३।१५.

विकल्पो व्यवस्थितः अग्निचयने अकामिनः उख्यो-ऽग्निर्नित्यः, कामिनस्तु वृक्षाग्राद्याहृतः काम्यः इति । १२।४।७.

विकल्पो व्यवस्थितः अतिग्राह्याणां पृष्ठ्यत्र्यहद्वये । संकर्ष. ३।३।५.

विकृतिगतद्रव्यादिवाचकपदस्योहः सौर्यादिविकृतौ अतिदिष्टे मन्त्रे । ९।३।१.

विकृतियागेषु केषुचित् अग्निचयनस्य अतिग्राह्याणां चातिदेशः । १०।८।११.

विकृतिषु पार्वणहोमौ न भवतः । संकर्ष. २।२।३.

विकृतौ इडानिगदे यज्ञपतिशब्दस्य नोहः । ९।१।१४.

विकृतौ द्विबहुपत्नीकायाम् 'पत्नीं संनह्य' इत्यत्र वचनस्य नोहः । ९।३।७.

विकृतौ पार्वणहोमयोर्नातिदेशः । ९।२।१८.

विकृतौ प्राकृतकाम्यगुणानां नातिदेशः । ८।१।१४.

विकृतौ प्राकृतैकदेशग्रहणे प्राथमिकानामेव ग्रहणम् । १०।५।१.

विकृतौ लुप्तार्थानां प्राकृतानामङ्गानां बाधः । १०।१।१.

विदेवनाधिकरणम् ( कृत्स्नयागाङ्गता ) । ४।४।२.

विदेवनाधिकरणम् ( विदेवनादीनामभिषेकात् प्राग-पकर्षः राजसूये ) । ५।२।१०.

विधिमन्त्राधिकरणम् ( सौत्रपदानुसारेण शीर्षकम् । मन्त्रगतमाख्यातं न विधायकम् ) । २।१।६.

विधिवन्निगदाधिकरणम् ( फलविधिवत् निगद्यमानमपि वाक्यं स्तावकमेव ) । १।२।२.

विधिशब्दाधिकरणम् ( यागादौ विधिगतशब्देनैव देवताप्रकाशनं कार्यम् ) । १०।४।१२.

वेदिस्तरणादेः पुरुषार्थत्वम् । ४।१।१२ वर्णकं २.

वेदेर्दार्शिक्याः सोमाङ्गेष्टिपश्वादिषु सौमिकवेद्या प्रसङ्गसिद्धिः । १२।१।३.

वेदोपक्रमाधिकरणम् ( ऋगादिशब्देन वेदा एवोपक्रान्ताः ) । ३।३।१.

वैकङ्कतपात्राणां दर्शादिसर्वयज्ञेषु विनियोगः । ३।१।१२.

वैकल्पिकन्यायः ( परिगृहीतद्रव्यापचारे वैकल्पिकद्रव्यान्तरस्य न प्रतिनिधित्वम् ) । ६।३।१२.

वैदिकस्यैव विध्यन्तस्य सौर्यादौ अतिदेशः । ७।४।२.

वैमृधन्यायः ( वैमृधः पौर्णमास्यङ्गमेव, न दर्शाङ्गम् ) । ४।३।१३.

वैमृधादौ सामिधेनीसामदश्यपुनःश्रवणस्य अनारभ्याधीतसामदश्येन उपसंहारः । १०।८।९.

वैमृधारम्भः आधानानन्तरपौर्णमास्यामेवेति न नियमः । संकर्ष. १।२।७.

वैमृधो भिन्नतन्त्र एव, न समानतन्त्रः । संकर्ष. १।२।५.

वैमृधो यद्युपबन्धात् अनित्य एव । संकर्ष. १।२।६.

वैरूपादिसाम्नां बहुव्रीहिपदनिर्दिष्टानां उक्थ्यादिक्रतौ होतुः पृष्ठे एव निवेशः, न तु कृत्स्ने क्रतौ । १०।६।६.

वैश्यक्षत्रिययोरपि ऋणत्रयापाकरणं नित्यम् । ६।२।११.

वैश्यराजन्ययोर्यजमानयोः फलचमसः होमभक्षयोः । ३।५।१९.

वैश्यस्तोमे अविरुद्धानां बृहद्रथंतरधर्माणां कण्वरथंतरे समुच्चयः । ९।२।१६.

वैश्यस्तोमे कण्वरथंतरस्य पृष्ठस्तोत्रसाधनतया विहितस्य 'पुनानः सोम धारया' इति स्वयोनौ एव गानम् । १०।४।२२.

वैश्यस्तोमे कण्वरथंतरस्य पृष्ठस्तोत्रसाधनतया विहितस्य स्वोत्तरायां 'दुहान ऊधर्दिव्यम्' इत्यस्यामेव गानम् । १०।४।२३.

वैश्वदेवपर्वगतमैत्रावरुण्यामिक्षाधर्माणां सर्वामिक्षासु अतिदेशः । ७।३।१०.

वैश्वदेवपर्वगतैककपालधर्माणाम् आग्रयणगतद्यावापृथिव्यैककपाले अतिदेशः । ७।३।१०.

वैश्वदेवपर्वणि 'प्राचीनप्रवणे यजेत' इति विहारदेशस्योपदेशः । संकर्ष. २।४।१३.

वैश्वदेवाधिकरणम् ( वैश्वदेवशब्दो यागविशेषनामधेयम् ) । १।४।१०.

वैश्वदेविकसार्थवादविधिकाण्डस्य वरुणप्रघासगतपञ्चसंचरेषु अतिदेशः । ७।१।३.

वैश्वदेवीयदेवताऽऽवाहनकाले विष्णोरुरुक्रमस्य आवाहनस्य बाधः । १०।१।१ वर्णकं २.

वैश्वदेवेन पर्वणा गवां प्रभूतपयस्कत्वे वसन्तेऽपि यजेत । संकर्ष. ३।१।२३.

वैश्वदेव्यामिक्षायां सांनाय्यगतपयोधर्माणामतिदेशः । ८।२।४.

वैश्वानरपार्जन्यचतुर्होतृहोमानां सकृदेवानुष्ठानं चातुर्मास्येषु पाञ्चसांवत्सरिकावृत्तावपि । संकर्ष. ३।१।२१.

वैश्वानराधिकरणम् ( अष्टाकपालादिवाक्यानि अर्थवादः ) । १।४।११.

वैश्वानरेष्टिः संवत्सरमुख्यधारणाभावे कार्या । ४।४।६.

वैश्वानरेष्टौ पत्नीसंयाजगतकपालाभिहोमनिमित्तवत्यां द्वेष्याय दानमदृष्टार्थम् । १०।२।१६.

वैश्वानर्यां प्राकृतावदानधर्मस्य नातिदेशः । संकर्ष. २।२।१६.

वैश्वामित्रतत्समानकल्पानामेव सत्रेऽधिकारः । ६।६।४.

वैष्णवन्यायः ( राजसूयगतवैष्णवे आतिथ्यावैष्णवधर्माणां नातिदेशः ) । ७।३।६.

वैसर्जनहोमेषु आज्यमेव, न सोमः ज्योतिष्टोमे । संकर्ष. ३।२।२०.

वौषट्–वषडादीनां ब्राह्मणादीनां व्यवस्थया प्रयोगः ( वषट् ब्राह्मणस्य, वौषट् राजन्यस्य, वौक्षट् वैश्यस्य, षट् निषादरथकारयोः ) । संकर्ष. ४।३।२.

व्यवस्थाऽधिकरणम् ( अवहननादीनां व्रीहिष्वेवानुष्ठानम्, नाज्यादौ इति व्यवस्था ) । ३।१।४.

संतर्दनाधिकरणम् ( फलकयोः संतर्दनं दीर्घसोमेषु )। ३।३।११.

संतापनस्य सौर्ये चरौ बाधः। १०।१।१५.

संदिग्धस्योपक्रमस्य वाक्यशेषान्निर्णयः। १।४।१३.

संधिदिने एव सोमे सुत्या। संकर्ष. ३।१।६.

संनहनं सर्वासां यजमानपत्नीनां दर्शादौ। संकर्ष. १।२।१.

संनहनहरणमन्त्राधिकरणम् ( आतिथ्याबर्हिषि अग्नीषोमीयदेशे स्मरणार्थं संनह्य आह्रियमाणे संनहनहरणमन्त्रयोर्नावृत्तिः। ) १२।१।२१.

संनहनादौ यजमानस्य पत्नी एव, नाध्वर्योः। संकर्ष. १।२।१ वर्णकं १.

संनिधिपाठात् 'शुन्धध्वं दैव्याय कर्मणे' इति मन्त्रः सांनाय्यपात्रशोधने विनियुज्यते। ३।३।५.

संनिपत्योपकारकस्तृतीयोऽनुयाजो दर्शपूर्णमासयोः। १०।४।१९.

संमार्गाधिकरणम् ( स्रुक्संमार्गो गुणकर्म )। २।१।४.

संमार्जनाधिकरणम् ( संमार्जनं सर्वेषां ग्रहाणाम् )। ३।१।७.

सयवनस्य बाधः सौर्ये चरौ। १०।१।१३.

संयाज्ये त्रिष्टुभौ काम्ये नित्ये च संयोगपृथक्त्वेन दर्शपूर्णमासयोः। संकर्ष. ४।३।१२.

संयोगपृथक्त्वन्यायः। संयोगान्तरन्यायः ( कामनासंयोगः नित्यसंयोगश्च वाक्यद्वयेन पृथक् प्रतिपाद्यते )। ४।३।३.

संवत्सरशब्दस्य दिवसपरत्वात् विश्वसृजामयने सहस्रसंवत्सरसत्रे मनुष्याणामेवाधिकारः। ६।७।१३.

संवत्सरसत्रेषु गवामयनधर्माणामतिदेशः। ८।१।११.

संवपनस्य सौर्ये चरौ बाधः। १०।१।१४.

संवादाधिकरणम् ( रजस्वलया संवादस्य निषेधः पुरुषार्थः )। ३।४।७.

संसवादिविकृतौ उपवत्यप्रवत्योः ( उपास्मै गायत, प्रयुजो वाचो अग्रियः ) नैमित्तिकयोः प्राकृत्योः पृष्ठप्रतिपदोः नानुष्ठानम्। १०।५।१६.

संसवादौ उभयसामके क्रतौ बृहद्रथंतरयोः पृष्ठस्तोत्रे एव समुच्चित्य निवेशः। १०।६।८.

संस्थाऽधिकरणम् ( सोमसंस्था न समानविधानाः )। ३।६।१६.

सक्तुन्यायः ( सक्तून् जुहोति इति द्वितीया न प्राधान्यबोधिका )। २।१।४।१२ भाष्यवार्तिकयोः.

सत्रं संकल्प्य अकरणे प्रायश्चित्तार्थं विश्वजिद्यागं कुर्यात्। वि. ६।४।११.

सत्रकर्तॄणां प्रत्येकं पृष्ठशमनीयकर्तृत्वं ऋत्विगन्तरसंपादनेन। १०।२।१३.

सत्रत्वमासनोपाग्निचोदनत्वम्, अहीनत्वं तु यजतिचोदनत्वे सति अहर्गणसाध्यत्वम्। १०।६।१६.

सत्रन्यायः ( रात्रिसत्रन्यायः )। ४।३।८.

सत्रसंकल्पानन्तरं सत्रमकुर्वतः सत्रफलार्थतया विश्वजिद्विधानम्। ६।४।११.

सत्रात्मकद्वादशाहधर्माणामतिदेशः पञ्चदशरात्रे कुण्डपायिनामयने च। ८।२।६.

सत्राय प्रवृत्तमात्रस्य साम्युत्थाने विश्वजिद्विधानम्। ६।५।७.

सत्राहीनोभयात्मकद्वादशाहधर्माणामतिदेशः व्यवस्थया सत्रे अहीने च। ८।२।५.

सत्रे अधिकारः वैश्वामित्रतत्समानकल्पानामेव ( कल्पः प्रयोगः )। ६।६।४.

सत्रे अधिकारः समानकल्पानामेव ( कल्पः प्रयोगः, न तु सूत्रम् )। ६।६।१.

सत्रे ऋतुयाज्यावरणहिरण्यदानयोः अदृष्टार्थयोर्न बाधः। १०।२।२६.

सत्रे ऋत्विक्परिक्रयस्य बाधः। १०।२।११.

सत्रे कस्यचित् स्वामिनो मरणे प्रतिनिधिर्भवति। ६।३।८.

सत्रे प्रत्येकं कृत्स्नेन फलेनार्थिनामधिकारः। ६।२।१.

सत्रे ब्राह्मणानामेवाधिकारः। ६।६।३.

सत्रे यजमानसंस्काराः सर्वयजमानार्थाः। १२।४।१४.

सत्रे यजमाना एव ऋत्विजः। १०।६।१५.

सत्रे यजमाना बहवः। १०।६।१४.

समुच्चयः प्राकृताहतवाससः तार्प्यादिभिः महाव्रते। १०।४।७.

समुच्चयः बृहद्रथंतरधर्माणामविरुद्धानां वैश्यस्तोमे कण्वरथंतरे। ९।२।१६.

समुच्चयः बृहस्पतिसवादिविकृतौ औपदेशिकैर्बार्हस्पत्यादिग्रहैः आतिदेशिकानामैन्द्रवायवादिग्रहाणाम्। १०।४।२.

समुच्चयः भिन्नकार्याणां गुणानामेकस्मिन् कर्मणि। १२।३।३.

समुच्चयः वत्सत्वगहतवाससोः अष्टरात्रगते विश्वजिति। १२।३।१.

समुच्चयः वाजपेये श्रुतेन यजुर्युक्तरथेन अध्वर्योः दास्यादिभागान्तरस्य। १०।३।२१.

समुच्चयः श्येनादौ उपदिष्टेन निवीतेन अतिदिष्टस्य उपवीतस्य। १०।४।१.

समुच्चयः संतानं च याज्यावषट्कारयोः। संकर्ष. ४।३।३.

समुच्चयः सांग्रहीष्टौ उपदिष्टैरामनहोमैः आतिदेशिकानामनूयाजानाम्। १०।४।४.

समुच्चयः सोमक्रयद्रव्याणाम्। १२।४।३.

समुच्चयः सोमभक्षाणां निमित्तसंनिपाते। ३।५।१२.

समुच्चयः हौत्रमन्त्राणाम् (याज्याऽनुवाक्ययोः)। १२।३।१६.

समुच्चयाधिकरणम् (समुच्चयः अदोषनिर्घातार्थानां प्रायश्चित्तानाम्।) १२।३।६.

समुदायानुसमयन्यायः (मुष्टिकपालादिषु)। ५।२।३.

समूढस्य न्यूढो द्वादशाहो विकारः। १०।५।२४

सर्वपरिदानाधिकरणम् (सर्वपुरुषपरामर्शात् अवगोरणादीनां प्रकरणादुत्कर्षः)। ३।४।६.

सर्वपृष्ठायाम् 'न बृहत्या वषट् कुर्यात्' इति अक्षरन्यूहनविध्यर्थवादः। संकर्ष. ४।४।४.

सर्वपृष्ठायामिष्टौ न हविर्विभागमन्त्रावृत्तिः। संकर्ष. १।३।२४.

सर्वपृष्ठेष्टिः (शेषकार्यं तन्त्रेण)। ३।५।४.

सर्वप्रदानाधिकरणम् (सौत्रपदानुसारि शीर्षकम्। द्विरवत्तस्यैव होमः)। ३।४।१४.

सर्वशक्त्यधिकरणम् (काम्येषु सर्वाण्येवाङ्गान्यनुष्ठेयानि)। ६।३।२.

सर्वशब्दन्यायः (हारियोजने सर्वशब्देन ग्रावस्तुतोऽपि ग्रहणम्)। ३।५।९.

सर्वशाखाप्रत्ययन्यायः। २।४।२.

सर्वस्वदानन्यायः (विश्वजिति सर्वस्वदाने पित्रादयो न देयाः)। ६।७।१.

सर्वस्वस्य विद्यमानस्यैव विश्वजिति दानम्। ६।७।४.

सर्वस्वारः यजमानमरणोत्तरमपि समापनीयः। १०।२।२३.

सर्वस्वारे यजमानजीवद्दशायां क्रियमाणप्रायणीयाऽऽदौ सूक्तवाकान्तर्गतायुराशासनादेर्न बाधः। १०।२।२५.

सर्वस्वारे यजमानमरणोत्तरं क्रत्वर्थं कर्तव्यम्, इतरन्न कर्तव्यम्। १०।२।२४.

सर्वौषधावघातस्य नाभ्यासः अग्निचयने। ११।१।६.

सर्वौषधेषु इष्टकाधर्मा अग्निचयने न कर्तव्याः। संकर्ष. २।१।८.

सवनीयपशुधर्माणाम् ऐकादशिनेषु पशुषु अतिदेशः। ८।१।७.

सवनीयपुरोडाशाः शाक्त्यानामयने तरसमयाः। ३।८।२२.

सवनीयपुरोडाशेषु सौमिकपात्रैर्ग्रहचमसैः दार्शिकपात्राणां जुह्वादीनां न प्रसङ्गः। १२।१।४.

सवनीयपुरोडाशेषु हविष्कृदाह्वानाभावः। १२।२।३.

सवनीयादिन्यायः (सवनीयपुरोडाशेषु पाशुकतन्त्रस्यैव प्रसङ्गः)। १२।२।१२.

सवनीये पशौ अग्नीषोमीयपशुधर्माणामतिदेशः। ८।१।६.

सवनीये पशौ पशुपुरोडाशः कर्तव्यः। १२।२।२.

सवित्रादिपदानां निर्वापमन्त्रगतानां नोहः। ९।१।१२.

'स वैव स्यात्' इति प्राजहितवादो ज्योतिष्टोमे। संकर्ष. ३।२।२१.

सामविकल्पः आघ्राने विहितत्वात् निन्दितत्वात् । १०।८।६.

सामशब्दो रथंतरादिशब्दाश्च गीतिवाचकाः । ९।२।१.

सामिधेनीकार्ये मानवीनामृचां एकादशानामेव दाश-तयीभ्यः समानयनं सोमारौद्रेष्टौ । १०।६।१९.

सामिधेनीकाले 'अन्तर्वेद्यन्यः पादः' इति लक्षणया देशविधिः । संकर्ष. ४।१।३.

सामिधेनीनां काम्यसंख्याया विवृद्धौ प्रथमोत्तमे त्रिरभ्यस्य अवशिष्टानामृचामागमेन संख्यायाः पूरणम्, नाभ्यासेन दर्शपूर्णमासयोः । १०।५।८.

सामिधेनीनां नाहुतिमन्त्ररूपत्वम् । संकर्ष. २।४।३.

सामिधेनीनां सर्वासामेव सांतत्यविधिः ( तच्च पूर्वस्या ऋच उत्तरार्धस्य उत्तरस्या ऋचः पूर्वार्धस्य सांतत्येनैव सिध्यति ) । संकर्ष ४।१।६.

सामिधेनीनामेकविंशतेरनुवचनं प्रतिष्ठाकामस्य दर्श-पूर्णमासप्रयोगान्तर्गतम् । ३।१।११.

सामिधेनीनिषेधेऽपि नावाहनबाधः गृहमेधीये । संकर्ष. ४।४।७.

सामिधेनीषु आद्योत्तमयोः अनवानत्वविधिः तृतीये वनने एव । संकर्ष. ४।१।५.

सामिधेनीषु आद्योत्तमयोः त्रिरावृत्त्या संख्यापूरणम् । संकर्ष. ४।१।४.

सामिधेनीषु उत्तरार्धपूर्वार्धयोः संधानं कार्यम् । संकर्ष. ४।१।७.

सामिधेनीषु त्रिरभ्यासः प्रथमोत्तमस्थानधर्मः, न तु प्रवोवाजादिऋग्विशेषधर्मः दर्शपूर्णमासयोः । ९।१।१०.

सामिधेनीषु 'त्रिर्विगृह्णाति' इति विग्रहः 'तं त्वा समिद्भिरङ्गिरः' इत्यस्यामेव ऋचि । संकर्ष. ४।१।९.

सामिधेनीषु 'त्रींस्तृचाननुब्रूयात्' इति त्रित्रिरुक्ते प्रथमोत्तमे एव द्वौ तृचौ 'अग्न आ याहि' इत्यादिश्च तृतीयस्तृचः । संकर्ष. ४।२।१.

सामिधेनीषु पठिते एव आद्यान्त्ये ऋचौ राथंतरी बार्हती च, न तु सामयोनी । संकर्ष. ४।१।८.

सामिधेनीषु प्रणवविधानम् अन्त्ये ऋगक्षरे एव टेः स्थाने ('अचोऽन्त्यादि टि' पा० १।१।६४) । संकर्ष. ४।१।१२.

सामिधेनीषु प्रणवविधानम् ऋगक्षरस्थाने एव । संकर्ष. ४।१।११.

सामिधेनीषु प्रणवशब्दवाच्यस्य ओङ्कारस्यैव विधानम्, न तु 'प्र ण व' इति शब्दस्य । संकर्ष. ४।१।१३.

सामिधेनीषु 'समिद्वती घृतवती चानूच्येते' इति 'तं त्वा समिद्भिरङ्गिरः घृतेन वर्धयामसि' इत्येव ग्राह्या ( द्विवचनं छान्दसं पदद्वयपरं वा ) । संकर्ष. ४।१।१०.

सामिधेनीषु 'सर्वाणि छन्दांसि अनुब्रूयात्' इति गायत्रीत्रिष्टुब्जगत्य एव सर्वाणि च्छन्दांसि । संकर्ष. ४।२।२.

सामिधेनीसंख्यायां काम्यविवृद्धौ आगन्तूनामृचां समिध्यमानवतीसमिद्धवत्योरन्तराले निवेशः । ५।३।३.

सामिधेनीसाप्तदश्यं विकृतिगामि । ३।६।२.

सामिधेनीसाप्तदश्यपुनःश्रवणस्य अनारभ्याधीतसाप्त-दश्येन उपसंहारः वैमृधादौ । १०।८।९.

सामिधेन्य एकादशैव अगस्त्यस्यकयाशुभीयादौ । संकर्ष. ४।४।३.

सामिधेन्यनुवचनं दक्षिणहविर्धानदेशे ज्योतिष्टोमे । ३।७।७.

सामिधेन्यनुवचनार्थम् 'उत यत् सुन्वन्ति' इति वाक्येन हविर्धानदेशो लक्ष्यते ज्योतिष्टोमे । ३।७।७.

सामोह्न्यायः ( सामयोन्यां ये आईभावादय, ते उत्तरयोस्तद्गतवर्णवशेनैव कर्तव्याः ) । ९।२।९.

साम्नामप्राकृतानामागमेन अतिरात्रे एकविंशादौ काम्ये अधिकसंख्यापूरणं कर्तव्यम् । १०।५।६.

साम्नामृक्संस्कारकर्मत्वेन प्राधान्यं नास्ति । ९।२।२.

साम्नैव स्तोतव्यम् । ९।२।८.

सायमग्निहोत्रमारभ्य प्रतिहोमाः कार्याः प्रतिहोम-करणपक्षे । ६।५।१३.

सारस्वतमित्रसत्रेषु अधिकारः आहिताग्नीनामिष्टप्रथम-यज्ञानाम् । ६।६।५.

सारस्वते सत्रे दक्षिणादानमदृष्टार्थम् । १०।२।१५.

सोमधर्माणाम् उद्भिदादिषु अव्यक्तयागेषु अतिदेशः। ८।१।९.

सोमधर्मासमानविधित्वाधिकरणम् ( फलचमसस्य )। ३।६।१३.

सोमभक्षः अनुज्ञापूर्वकः एकपात्राणामेव । ३।५।१७.

सोमभक्षः एकपात्रे अनुज्ञापूर्वकः । ३।५।१४.

सोमभक्षनिमित्तानां समुच्चयः । ३।५।१२.

सोमभक्षमन्त्रे अनुवषट्कारदेवताया अग्नेः नोपलक्षणम् । ३।२।१६.

सोमभक्षे अनुज्ञापनं वैदिकमन्त्रेण । ३।५।१५.

सोमभक्षे अनुज्ञायाः याचने दाने च अर्थानुसारेण मन्त्रक्रमः। ३।५।१६.

सोमभक्षे होमाभिषवौ समुचितं निमित्तम् । ६।४।७.

सोमयागप्राधान्याधिकरणम् । ४।४।१२.

सोमयाजिनां तृतीयमपि नाम ग्रहीतव्यं सूक्तवाके । संकर्ष. ४।३।२१.

सोमयाजी एव बहुयाजी नाम । संकर्ष. ४।२।३.

सोमलिप्तानामवभृथे नयनं प्रतिपत्तिः । ४।२।८.

सोमवमनाधिकरणम् ( सोमवमने प्रायश्चित्तम् ) । ३।४।१२.

सोमविकाराणां दर्शपूर्णमासानुष्ठानात् प्राङ् नानुष्ठानम्। ५।४।९.

सोमविक्रयी ऋत्विग्भ्यो भिन्नः । ३।७।१५.

सोमविद्याप्रजाधिकरणम् ( सोमविद्याप्रजानां संपादनं नित्यम् ) । ६।२।११.

सोमशेषभक्षश्चमसिनाम् । ३।५।७.

सोमशेषभक्षे होमाभिषवौ समुच्चित्य कारणम् । ३।५।११.

सोमसंस्थाः न समानविधानाः । ३।६।१६.

सोमस्य प्रतिनिधिः श्रौतः पूतीकाः ( रानशेर इति भाषा ) । ६।३।१३.

सोमस्य मानमुपावहरणं च वाससा कर्तव्ये ज्योतिष्टोमे। १०।६।२०.

सोमाङ्गेष्टिगतशेषभक्षाणां सौमिकदक्षिणया न प्रसङ्गसिद्धिः । १२।१।१७.

सोमाङ्गेष्टिपश्वादिषु सौमिकवेद्या दार्शिकवेदेः प्रसङ्गसिद्धिः । १२।१।३.

सोमापवर्गे गतश्रियः शालामुखीयवत् आहवनीयस्यापि समारोपः । संकर्ष. ३।२।३०.

सोमापवर्गे शालामुखीयस्यैव समारोपः । संकर्ष. ३।२।२९.

सोमापहारादौ एकादिदक्षिणया नित्यप्रयोगीयगोगतद्वादशशतसंख्याया एव बाधः, न तु अश्वादीनाम् । १०।३।१५.

सोमापौष्णे पशौ विहितेन औदुम्बरेण प्राकृतस्य खादिरस्य बाधः यूपार्थम् । १०।७।१८.

सोमारौद्रादियागे श्रूयमाणैः शुक्लादिगुणविशिष्टव्रीहिभिः प्राकृतयवानां बाधः । १०।७।१९.

सोमारौद्रे यागे उपदिष्टैः शरैः अतिदिष्टानां कुशानां बाधः । १०।४।१ वर्णकं १.

सोमारौद्रेष्टौ सामिधेनीकार्ये मानवीनामृचां एकादशानामेव दाशतयीभ्यः समानयनम् । १०।६।१९.

सोमार्थे वरणम् औपवसथ्येऽहनि । संकर्ष. ३।४।१४.

सोमे आज्यभागप्रतिषेधस्य नित्यानुवादत्वेन पशौ आज्यभागप्रतिषेधस्यार्थवादत्वम् । १०।८।२.

सोमे ऋत्विजः सप्तदश । ३।७।१६.

सोमे ऐष्टिकधर्माणां नातिदेशः । ८।१।३.

सोमेन धिष्ण्यव्याघारणं परिप्लुपात्रेण । संकर्ष. ३।२।१९.

सोमेन्द्रश्चरुः यजमानसोमपानव्यापदि । ३।४।१३.

सोमे सुत्या संधिदिने एव । संकर्ष. ३।१।६.

सोमोपावहरणार्थम् अहर्गणे प्रत्यहं पृथग् वासः उत्पादनीयम् । १०।६।२१.

सौत्येऽहनि अग्निष्ठभिन्नानां यूपानां मानम् । संकर्ष. १।४।१७.

सौत्रामणी ' अग्निं चित्वा ' इति विहितः क्रत्वङ्गम्, न नित्यङ्गम् । संकर्ष. १।१।५.

सौत्रामणी चयनाङ्गमपि । ४।३।१२.

होमाभिषवौ सोमभक्षे समुच्चित्य निमित्तान्तरम् । ३।५।११.

होमे पुरस्तात्स्वाहाकारोऽपि मन्त्रः करणम् । संकर्ष. २।४।१७.

होमो दर्विहोमेषु प्रतिहोमं समिधमाधायैव । संकर्ष. २।४।८.

होलाकाऽधिकरणम् ( होलाका सर्वलोकधर्मः, न प्राच्यानामेव ) । १।३।७.

हौत्रमन्त्राणां समुच्चयः ( याज्याऽनुवाक्ययोः ) १२।३।१६.

हौत्रमाध्वर्यवमौद्गात्रम् इति समाख्यया होतुः अध्वर्योः उद्गातुश्च तत्तत्कर्मभिः संबन्धः । ३।३।६.

■ उपांशुयाजे ध्रौवाज्यस्य विधानम् ॥

**उपांशुयाजमन्तरायजतीति हविर्लिङ्गाश्रुतित्वाद् यथाकामी प्रतीयेत । १०।८।१५।४७ ॥**

**भाष्यम्**-- दर्शपूर्णमासयोराम्नायते ' उपांशुयाजमन्तरा यजति ' इति । तत्र द्रव्यं प्रति संदेहः किमनियमः, उत नियतं किञ्चित् द्रव्यमिति । किं प्राप्तम् ? न किञ्चित् हवीरूपं श्रूयते । तस्मात् यथाकामी प्रतीयेत । तत्रोच्यते । श्रूयते हवीरूपम् ' आज्यस्यैव नौ उपांशु पौर्णमास्यां यजन् ' इति । तस्मात् आज्यद्रव्यकं स्यात् । उच्यते । एवमपि अनियमः । यत्किञ्चित् आज्यं गृहीत्वा इज्येतेति ।

**ध्रौवाद् वा, सर्वसंयोगात् । ४८ ॥**

**भाष्यम्**-- ध्रौवात् वा आज्यात् इज्येत, न यतः-कुतश्चित् । कुतः ? सर्वसंयोगात् । सर्वयजतिभिर्हि संबद्धं ' सर्वस्मै वा एतद् यज्ञाय गृह्यते, यद् ध्रुवायामाज्यम् ' इति । तस्मात् ध्रौवाज्यात् यजेतेति ।

**सोम**--असोमयाजिनः सांनाय्यबाधवत् उपांशुयाजेऽपि अर्थप्राप्तद्रव्यान्तरस्य न बाधः इत्युत्थितेः **दृष्टान्तसंगतिः** । विस्पष्टतादर्थ्यचतुर्थीबलात् अश्रुतद्रव्यकप्रकृतयागानां द्रव्यापेक्षाबलात् ध्रौवस्य प्रयोजनापेक्षाबलाच्च विधितात्पर्ये निश्चिते वैशब्दो ' यदाग्नेयः' इत्यादौ यच्छब्दवत् न विधिशक्तिप्रतिबन्धकः । **सूत्रार्थस्तु**-द्रव्यं विना यागानुपपत्त्या यजतेर्द्रव्यलिङ्गत्वात् विशेषाश्रवणाच्च ' उपांशुयाजमन्तरा यजति ' इत्यत्र द्रव्ये यथाकामी इति ।

**वि**--' उपांशुयाजे यत्किञ्चिद् द्रव्यमाज्यमुता,-ग्रिमः । विशेषानुक्तितो, मैवं ध्रौवाज्यस्य विधानतः ॥'

**भाट्ट**-- उपांशुयाजे उत्पत्तिवाक्ये द्रव्याविधानेऽपि आक्षेपेण यत्किञ्चिद्द्रव्यप्राप्तौ ' चतुर्ध्रुवायां गृह्णाति ' इति प्रयोजनविशेषासंयुक्तं ध्रौवाज्यं द्रव्यसाकाङ्क्षप्रकृतक्रियामात्रे अधिकाराख्यप्रकरणेन विनियुज्यमानम् आज्यभागादाविव उपांशुयाजेऽपि प्राप्नोति । ' सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यम् ' इत्यनन्यशेषभूतात् वचनाच्च वैयर्थ्यबललब्धविधिशक्तिकात् तल्लाभः । **न च** अत्र यत्र पत्नीसंयाजादौ सामान्यतः आज्यद्रव्यकत्वं प्राप्तम्, तत्र लाघवात् ध्रौवतामात्रविधिरस्त्विति **वाच्यम्** । तथात्वेऽपि दर्शपूर्णमासप्रकरणपठितचतुर्गृहीतविधिना आज्यभागादाविव उपांशुयाजेऽपि सामान्यात् आज्यद्रव्यस्य प्राप्तत्वात् तत्प्रकृतित्वेन ध्रौवविधानोपपत्तेः, पत्नीसंयाजादौ आज्यस्थाल्याज्यस्य वाचनिकत्वाच्च । न चैवं प्रकरणादेव ध्रौवाज्यस्य उपांशुयाजाद्यर्थत्वसिद्धेः ' सर्वस्मै वै ' इति वाक्यानर्थक्यापत्तिः, प्रकरणात् अयज्ञेष्वपि अलङ्करणादिषु तत्प्राप्तौ तद्व्यावृत्तिफलकत्वेन सार्थक्यात् । अत एवात्र यज्ञोद्देशेन एतच्छब्दार्थभूतध्रौवाज्यस्यैव विधिः, तत्तात्पर्यग्राहकं च 'ध्रुवायामाज्यम्' इति पदम् । अतो न विधेयानेकता । एवं चालङ्करणादौ आज्यस्थाल्याज्यमेव । सर्वथा उपांशुयाजे ध्रौवमेवेति तद्विकारभूतं मधूदकम् आज्यस्य बाधकम् । पूर्वपक्षे तु अनियमात् नियामकमात्रमिति बाधोपयोगिता । पूर्वपक्षस्यातिमन्दत्वेऽपि शिष्यहितार्थमुक्तत्वान्न विरोधः ।

**मण्डन**--' उपांशुः स्याद् ध्रुवाज्यतः । ' १६.

**शंकर**-- ' ध्रौवं चोपांशुयाजके । ' १७.

* उपांशुयाजेऽपि देवताऽपनयः चन्द्राभ्युदितेष्टौ । भा. ६।५।२।१०-११. * उपांशुयाजे याज्याऽनुवाक्यायुगलानां क्रमविनियुक्तानामपि देवताकल्पकत्वं दृश्यते । शु. पृ. ४५७.

आचारभङ्गं सोमभक्षे सावकाशत्वात् । सोमभक्षेऽपि सर्वमेतत् तुल्यमिति चेत्, नैतदेवम् 'न सोमेनोच्छिष्टा भवन्ति' इति श्रुतेः । तस्मात् चमसिभिर्भक्षयितव्यः सोमः इति । भाष्यमपि अनेनैव क्रमेण नेतव्यं न यथालिखितम् । उपपत्त्यन्तराणाम् उपपत्त्यन्तरव्यवधानेन क्लिष्टत्वात् । तस्माच्च अब्राह्मणस्य सोमभक्षणं प्रतिषेधति । यदि च 'प्र यजमानस्य' इति समाख्यया न सोमभक्षः प्राप्यते, ततः फलचमसविधौ 'स यदि सोमं बिभक्षयिषेत्' इति 'न सोमम्' इति च प्रतिषेधसंकीर्तनं नावकल्पेत । तस्मात् अस्ति चमसिनां सोमभक्ष इति ।

**शा–सोमयोः भाट्टे च इदमधिकरणं पूर्वाधिकरणे एव अन्तर्भावितम् ।**

**वि**—'किं प्रैतु होतुश्चमस इत्यभक्षोऽथ भक्षणम् ।, अभक्षोऽनुक्तितो, होतुश्चमसेत्याख्ययाऽस्तु तत् ॥'

**मण्डन**—'समाख्या कल्पयेद् भक्षम् ।'

**शंकर**— 'स समाख्यानिमित्तकः ।'

* ज्योतिष्टोमे तपः 'द्व्यहं नाश्नाति त्र्यहं नाश्नाति' इति याजमानमेव । वचनात्तु क चित् ऋत्विजामपि । भा. ३।८।३।९–१०, * ज्योतिष्टोमे तार्तीयसवनिकपुरोडाशादिषु हविष्कृदाह्वानं न कर्तव्यम् । १२।२।४। १२–१३, * ज्योतिष्टोमे 'तीर्थे स्नाति' इत्युक्तं तीर्थे स्नानम्, क्रतुयुक्तपुरुषधर्मत्वात् ज्योतिष्टोमप्रकरणे एव निविशते । ३।४।५।१४–१६.

**⌛ ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम् । ४।४।१२।३९ ॥**

तुल्यानि अविशिष्टम् इति पदच्छेदः । ज्योतिष्टोमे दीक्षणीयाप्रायणीयाऽऽदयो ऐष्टिकाः पाशुकाश्च यागाः सुत्यायां सोमयागाश्च भवन्ति । तत्र किं सर्वे यागाः प्रधानम्, सोमयाग एव वा प्रधानम् इतरदङ्गमिति विचारे पूर्वपक्षयति । ज्योतिष्टोमे सर्वाणि तुल्यानि प्रधानानि । हि यस्मात् प्रधानत्वे यत् कारणं फलवत्त्वम्, तत् सर्वेषां यागानामविशिष्टं समानं यागत्वात् । तस्मात् सर्वे यागाः प्रधानम् । इति पूर्वः पक्षः ।

**गुणानां तूत्पत्तिवाक्येन संबन्धात् कारणश्रुतिस्तस्मात् सोमः प्रधानं स्यात् । ४० ॥**

पूर्वपक्षं तुशब्देन निरस्यन् सिद्धान्तमाह । उत्पद्यते इत्युत्पत्तिः फलम् उत्पत्तिवाक्यम् । 'स्वर्गकामो यजेत' इति फलवाक्यम् । गुणाः त्रिवृत्पञ्चदशसप्तदशैकविंशरूपाः स्तोमाः ज्योतिःशब्दबोध्याः । गुणानाम् उत्पत्तिवाक्येन संबन्धस्य विद्यमानत्वात् कारणश्रुतिः पूर्वपक्षोक्तकारणस्य फलसंबन्धस्य बोधिका श्रुतिः संभवति । ज्योतिष्टोमस्य फलेन संबन्धात् ज्योतीरूपाणां स्तोमशब्दितानां गुणानां फलेन संबन्धः । स्तोमाश्च सोमार्थाः । तस्मात् ज्योतिष्टोमे सोमः प्रधानं स्यात् । सोमयागा एव प्रधानं दीक्षणीयाऽऽदयो यागास्तु अङ्गम् ।

**तथा चान्यार्थदर्शनम् । ४१ ॥**

सिद्धान्ते हेत्वन्तरमाह । 'शिरो वा एतद्यज्ञस्य यद्दीक्षणीया' इत्येवमादेः अन्यार्थस्य लिङ्गस्य दर्शनं भवति । एवं 'चतुर्विंशतिमानं हिरण्यं दीक्षणीयायां दद्यात्' 'प्रायणीयायां द्वे चतुर्विंशतिमाने' इति च ज्योतिष्टोमदक्षिणायाः सकाशात् भिन्ना दक्षिणा दृश्यते, तदपि लिङ्गं भवति । तेन दीक्षणीयाऽऽदीनामङ्गत्वं सिध्यति न प्रधानत्वम् । के.

*** ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम् ।**

'ज्योतींषि वा एतानि य एतस्य स्तोमाः' इत्यर्थवादे त्रिवृदादिस्तोमेषु ज्योतिष्ट्वव्यपदेशात् 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति' इति च विधौ सोमयागस्य त्रिवृदादिस्तोमयोगावगमात् प्रसिद्धार्थेन नाम्ना यज्यर्थो विशेष्यते इति । सु. पृ. ७२४.